हा० ॥श्रीगणेशायनमः॥ श्रीगुरुचरणकमलेभ्योनमः ॐगणाधिपंरामगुरोः पदाब्जन्दामोदराख्यम्पितरञ्चनत्वा॥प्राचीन
र० पद्यैर्वलभद्रनामाकरोतिसद्धायनरत्नसंज्ञं १ भागीरथीनीरविराजमानेश्रीकान्यकुब्जेनगरेतिरम्ये अभूद्भरद्वाजमह
१ र्षिवंशेश्रीलालनामागणकोषणधामा २ तस्यात्मजाःपञ्चवभूवुरेषांश्रीदेविदासःप्रथमस्त्वभूव व्यक्तेचयश्श्रीपति
पद्धतौचटीकाम्व्यधाच्छिष्यगणस्यतुष्ट्यै ३ तस्माल्लघुःखेटविचारदक्षःप्रख्यातकीर्तिर्विजितारिपक्षःश्रीक्षेमकर्णो
थततःकनिष्ठोनारायणोव्याकरणेपटिष्ठः ४ न्यायेयस्सुरराजपूजितनिभोवेदान्तिनामग्रणीर्मीमांसादिसमस्तशास्त्र
कमलप्रोद्बोधनेभास्करः श्रीमद्भूपतिवृन्दपूजितपदोभूदेवमूर्द्धामणिःश्रीमन्मिश्रचतुर्भुजस्समभवत्तस्माल्लघुर्द्ध
र्मवित् ५ तस्माल्लघुस्सकलशास्त्रकलापविज्ञोदामोदरस्समभवत्कृतिनाम्वरिष्ठः योभास्करोक्तिपितामहकर्मतुल्यां
वृत्तिम्व्यधान्निरुपमांकृतिनांहिताय ६ दामोदरस्यतनयौजातौवलभद्रवलिरामौवलभद्रेणचकिञ्चित्प्रकाश्यतेता
जिकङ्कुरोष्ठपया ७ निवन्धारचिताःपूर्वैस्संहितातजिकादिषु नहायनफलेतस्मान्निवन्धंकर्तुमुद्यतः ८ हि
ल्लाजखत्तखुतायांखिन्दिरोमकसम्मतम् सारसमरसिंहस्यक्रियतेवार्षिकंफलम् ननुकिमभिधेयकमिदंशास्त्र
म्प्रयोजनञ्चकिम् उक्तञ्च ज्ञातार्थंज्ञातसम्बन्धंश्रोतुंश्रोताप्रवर्तते ग्रन्थादौतेनवक्तव्यःसम्वन्धस्सप्रयोजनइतिअन्य राम
च्चसर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचित् यावत्प्रयोजनन्नोक्तन्तावत्तत्केनगृह्यते इत्युच्यते यवनाचार्येणपार १

स्याभाषया प्रणीतज्योतिश्शास्त्रैकदेशरूपं ताजिकादि   नानाविधफलादेशफलकं शास्त्रं ताजिकशब्दवाच्यम् तद
नन्तरसंभूतैः समरसिंहादिभिरधीतव्याकरणैर्ब्राह्मणैस्तदेवशास्त्रं संस्कृतशब्दोपनिबद्धं तदपिताजिकशब्दवाच्यमे
व अतएवैतेस्तायेवइक्कवालादयो यावंत्यः संज्ञा उपनिबद्धाः अत्र ग्रहराशिस्वरूपषोडशयोगसहमसागवर्षफलभा
वविचारदशाविभागगमनागमनाद्यनेकप्रश्नरूपास्ताजिकपदार्थाः प्रतिपाद्यत्वेन विषयभूताः एषां पदार्थानां ताजि
कग्रंथस्य च प्रतिपाद्यप्रतिपादकभावः संबंधः प्रयोजनन्तु भूतभविष्यवर्तमानशुभाशुभफलकथनम् उक्तं च नारदेन प्र
योजनं तु जगतः शुभाशुभनिरूपणमिति अत्र शास्त्रे तु वर्षफलप्रश्नादिजिज्ञासुरधिकारी स च ब्राह्मण एव उक्तं च वशिष्ठेन
अध्येतव्यं ब्राह्मणैरेव तस्माज्ज्योतिःशास्त्रं पुण्यमेतद्रहस्यम् एतद्बुध्वा सम्यगाप्नोति यस्मादर्थं धर्मं मोक्षमग्र्यं यशश्चे
ति ननु यवनाचार्यप्रणीतेक्कवालादिपारसीशब्दात्मकस्य ताजिकशास्त्रस्याध्यापनमेव नावरं नभिहितमध्ययनं तु दूराद
पास्तमेव उक्तं च स्मृतौ न वदेद्यावनीं भाषां प्राणैः कण्ठगतैरपीति तन्मूलभूतत्वात्समरसिंहादिशास्त्रस्याप्यध्ययनम
नुचितं मूलाशुद्ध्या सर्वमशुद्धमिति न्यायात् अत्रोच्यते यवनाचार्यस्याष्टादशसंहिताकर्तृषु परिगणितत्वात्तद्वचः प्रमा
णमेव उक्तं च कश्यपेन सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः लोमशः पौलिश
श्चैव च्यवनो यवनो गुरुः शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्तका इति तथा च यवनाचार्यप्रणीतं संस्कृतोपनिबद्धं जात

कशास्त्रं यवनजातकाख्यं तद्दृश्यते तथैव ब्रह्मणस्सकाशात्यारस्यदेशे तताजिककर्तृत्वमप्यस्य स्मर्यते उक्तञ्च रोमके
न ब्रह्मणागदितम्भानो र्भानुना यवनाय यत् यवनेन च यत्प्रोक्तं ताजिकं तत्प्रकाशितमिति अन्येपि ताजिकाचार्या उक्ताः
टोडरानन्दे खत्तखुतो रोमकश्च हिल्लाजो धिषणाह्वयः दुर्मुखाचार्य इत्येते ताजिकस्य प्रवर्त्तका इति अथ च ज्योतिः
शास्त्रफलम्पुराणकैरादेशप्रश्नमुच्यते तिसिद्धान्तस्मरणात् तथा च कृते पैतामहं शास्त्रं त्रेतायां बादरायणम् गार्गीय
न्द्वापरे प्रोक्तं सत्यं ताजिकं कलाविति जीर्णताजिकोक्तेः अथ च म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ऋ
षिवत्तेपि पूज्यन्ते किम्पुनर्दैवविद्द्विज इति गर्गोक्तेश्च यवनज्योतिर्ग्रन्थानामध्ययने द्विजानान्न दोषः अथ पङ्को
द्भवकमलादरीश्वरपू — जादौ त्यागस्स्यात्तथा भुजङ्ग फणवर्तिमणिग्रहमनादस्स्यात् उक्तञ्च गणेशदैवज्ञैः ब्रह्मद्वेषि
तुरुष्कसंभवमिदं ताजीयकं वर्तते शास्त्रं यद्यपि सद्द्विजैरपि तथाप्यध्येतुमर्हं भवेत् यस्माद्यत्सदसत्फलं निगदितं सम्यं
हि किम्पङ्कजे शङ्कापङ्कभवात्तथा फणिफणोत्पन्ने मणौ दूषणमिति हिल्लाजे तु ब्रह्मविष्णुरुद्रमुखनिर्गतशापेन य
वनतामाप्ते नस्त्रीस्तूर्यैरावयवनशास्त्रप्रणयनाद्द्विजानामपि सूर्यसिद्धान्तवदध्ययनं युक्तमित्युक्तम् केशवविष्णुमुखनिर्गतशापान्म्ले
च्छाधिगततिग्ममरीचेः रोमके च पुरिलब्धमशेषन्तद्द्विजातिभिरतोध्ययनीयमिति पुररो
मकपत्तने यदाचतद्देवप्रमेयं केनचित्सुबुद्धिनासमरसिंहादिना अधीतं तदीयं ज्योतिश्शास्त्रं गृहीत्वा तत्संस्काराद्व्यक्त

संज्ञापरिभाषेणसंस्कृतशब्दैरुपनिबद्धत्वेन कृतनेनदानकोपिदोषइति ज्ञेयम् नवदेश्यावनीभाषामेतद्वचनंतुया
वनीयकाव्यालंकारादिविषयकमितिसिद्धांतः ननुसूर्यसिद्धांतादिग्रंथास्तुश्रौतस्मार्तकर्मविषयकाः कथमस्य
ताजिकशास्त्रस्यश्रौतस्मार्तकर्मविषयकत्वं उच्यते अष्टवर्षंब्राह्मणमुपनीययेत् षष्ठेऽन्नाद्यकामइतितथा
अष्टवर्षाभवेद्गौरीनववर्षाचरोहिणी गौरींदद्याद्ब्रह्मलोकंसावित्रंरोहिणींददत् इत्यादिभिर्वाक्यैरुप नयनविवा
हकालान्नेकेभिहितास्तेषांज्ञानंकरितिताजिकशास्त्रादेवजायते अन्यच्च उक्तकालेपिगुरुशुद्धिंविनायथोप
नयनविवाहावुत्सर्गतोनभवतस्तथाजन्मकालात्तत्तद्वर्षेष्वरिष्टसंभवेपिनभवतोदुष्टफलस्यतुल्यत्वादिति ननुस
दसत्फलावबोधार्थमस्यताजिकशास्त्रस्यप्रवृत्तिस्ताजिकशास्त्रोक्तवर्षप्रवेशोजन्मकालाधीनस्तदंगीकारेचजा
तकशास्त्रादेवनृणांसदसत्फलबोधोभविष्यतिकिमनेनताजिकशास्त्रेणत्यत्रोच्यते जातकशास्त्रात्सदसज्ज्ञानंबहु
याससाध्यंबहुकालसाध्यंनास्ति तथाहिजन्मकालीनस्पष्टग्रहानंगीकृत्यदृष्टिषड्बलेष्टकष्टबलानिसर्वग्रहाणामा
युर्वर्षाणिचानीयततोदशामंतर्दशांचनिर्णीयजातकशास्त्रोदितंसदसत्फलंवाच्यम् तत्रापिइष्टकष्टबलाद्ययगणका
नयनेसत्त्वेदशागणितस्यदशाप्रवेशजन्मकालकलियातवत्सरस्पष्टादिगणितस्यचज्ञानेसिद्धांतविदामेवनयाद्दशा
नांतर्दशानाम् अन्यच्च एवमन्यायासेनानीतास्वपिदशासुफलविवेकः कर्तुमशक्यः कथमायुःप्रतंयेनहि यत्तद्दे वे

त्यादिवराहोक्तेर्ग्रहायुर्वर्षाणां दशवापञ्चदशवाविंशतिर्वित्याशीनां बहूनां वर्षाणां सत्वात्तनहूहसम्बन्धि शुभाशुभद
शाफलं तावत्कालमध्ये नैकरूपं सम्भवति अन्तर्दशायामपि वर्षाणां पञ्चकं — षट्कं वा एकैकस्य समायाति तत्रा
पि नैकरूपमन्तर्दशाफलं किंच दशासूपदशासु च कस्यचिदल्पवर्षत्वं कस्यचिद्बहुवर्षत्वं समायाति तत्रापि नैकरू
पफलं तावत्कुं शक्यते तस्माद्दशायासेनापि जातकफलं स्थूलकालफलं रमस्ति ताजिके तु वर्षमध्ये सर्वेषां ग्रहा
णां दशाः समायांति अन्तर्दशा तत्र दिनाद्या समायाति तत्र मासप्रवेशदिनप्रवेशफलमत्यन्तसूक्ष्मतरं समायात्यतस्सदसत्फ
लज्ञानं ताजिकशास्त्रादेव नितान्तं कान्तम् उक्तञ्च समरसिंहेन प्रयोजनं जातकफ—लेचिर — प्रयोज्यमतिस्फुर
ति पुंसां तेनात्र हायनफलस्य काश्यते ताजिकप्रोक्तमिति ननु प्राचीनकर्मरूपस्य दैवस्यावश्यम्भावित्वात्कथमुद्यमो
वर्षफलविचारस्य ॥ यदाहशौनकः येन तु यत्नात्प्रयत्नस्य विधानं सुरेशसचिवोपि यस्सासाम्प्रतिमस्सोपि न शक्तोऽन्य
था कर्तुमिति तथा दैवस्य बलवत्त्वे पुरुषाकारो निरर्थक इति अत्राहुः किं यदि दैवमेव फलं तदा कृष्याद्युपाये पुरुषाका
रस्य प्रवृत्तिर्न स्यात् अथ च श्रुतिस्मृत्याबेदितविधिनिषेधाश्च निरर्थकास्स्युः तदाह केशवार्कः फलं यदि प्राक्तनमेव तत्
किं कृष्याद्युपायेषु परः प्रयत्नः श्रुतिस्मृतिश्चापि नृणां निषेधविध्यात्मके कर्मणि किं निबन्धति अपि च जन्मान्तरार्जि
तं दैवमपि पुरुषाकारं विना न घटत इति पुरुषार्थस्यैव मुख्यत्वम् तथा च वसन्तराजः पूर्वजन्मजनितं पुराविदः कर्म

दैवमिति सम्प्रचक्षते उद्यमेन तदुपार्जितं तदा वाञ्छितम्फलं नैव केवलमिति अथ पुरुषार्थस्यैव मुख्यत्वाङ्गीकारे अवश्यभाविभावानां प्रतीकारो भवेद्यदि तदा दुःखैर्न बाध्येरन्नलरामयुधिष्ठिराः नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमित्यादिवाक्यानां का गतिरिति चेदत्रोच्यते तत्र कर्मणां वैचित्र्यं कानिचिद्दृढमूलानि कानिचिच्छिथिलमूलानि यत्र जन्मयत्रशकुनवर्षप्रश्नादिभिर्दशाफलरूपेण प्रतिबन्धकेन सन्तानविद्याद्यभावो निर्णीतस्तत्र ग्रहशान्त्यादिरूपेण प्रयत्नेनापि सन्तानादिप्रतिबन्धकीभूतदृढमूलत्वान्निवारयितुं न शक्यते यत्र तु ग्रहचारवशेन गोचरादिना सन्तानादिप्रतिबन्धो निर्णीतस्तच्छिथिलमूलत्वेन स्वस्त्ययनादिनोन्याय्यम् उक्तं च स्मृतौ हन्यते दुर्बलं दैवं पौरुषेण विपश्चितेति एवं शुभसूचकदशापाककाले क्रियमाणा यात्रा विनायासेन फलसाधिका अशुभदशायां हानिदेत्यतोवश्यं ज्योतिश्शास्त्रगणनोपयोगः पूर्वोक्तशौनकादिवाक्यानि दृढमूलकर्मविषयकाणि दैवपुरुषकारयोः साचिव्यमुक्तम् याज्ञवल्क्येन यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् एवं पुरुषकारेण विना दैवं न सिद्ध्यतीति संक्षेपात् ज्योतिश्शास्त्राध्यापने फलमाह माण्डव्यः एवंविधस्य श्रुतिनेत्रशास्त्रस्वरूपं भर्तुः खलु दर्शनं वै निहन्त्यशेषं कलुषं जनानां षडब्दजन्य मैसुखास्पदं स्यात् १ सूर्यसिद्धान्तेपि दिव्यं चक्षुर्ग्रहर्क्षाणां दर्शितं ज्ञानमुत्तमम् विज्ञायार्कादिलोकेषु स्थानम्प्राप्नोति शाश्वतमिति ज्ञानविशेषेण ज्योतिर्विदः पूजा नारदनम्यंजीशैरभ्यधायि

दशादिनक्षत्रपापं हन्ति सिद्धान्तवेत्ता त्रिदिनजनितदोषं तन्त्रविद्दूरस्थ करणभगणवेत्ता हन्त्यहोरात्रदोषं जनयति घनमंघ
स्तत्र नक्षत्रसूची तिन नक्षत्रसूचीलक्षणं वराहसंहितायां अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते स पंक्तिदूषकः पापो ज्ञे-
यो नक्षत्रसूचकः तिष्ठन्ति न ज्ञाननिग्रहाणां नैव साधनम् परवाक्येन वर्तन्ते नैव नक्षत्रसूचकाः श्राद्धे गणकानाम
पाङ्क्तेयत्वं धर्मशास्त्रेन नक्षत्रसूचिकाभिप्रायेण ज्ञेयम् उक्तञ्च वशिष्ठेन त्रिस्कन्धपारङ्गम एव पूज्यः श्राद्धे सदा भूसुर
वृन्दमध्ये। नक्षत्रसूची खलु पापरूपो हेयस्सदा सर्वसुधर्मकृत्ये इति तन्न स्मिन् ग्रन्थे ग्रन्थवाहुल्यमेव दूषणमिति चेन्न य
तो ग्रन्थसंक्षेपे ऽन्यग्रन्थापेक्षा विचारसंशयश्च भवति ग्रन्थविस्तारे संशयापेक्षयोरभावो भवति तस्माद्ग्रन्थविस्तारो न
दोषायेति ज्ञेयम् उक्तञ्च यादवेन संक्षेपे संशयापेक्षे श्रोतृस्यातामसंशयः वरीयान्विस्तरस्तस्मादपेक्षासंशयापहः।
२ त्यलमतिप्रसङ्गेन प्रकृतमनुसरामः अथ राशिस्वरूपमुक्तञ्च वामनजातके फलं राशिग्रहाधीनं सर्वेषां प्रा-
णिनां यतः अतो मेषादिराशीनां स्वरूपमाविष्क्रियते मेषो वृषोऽथ मिथुनं कर्कसिंहोऽथ कन्यका तुला ततो वृश्चि-
कश्च धनुर्मकर एव च कुम्भो मीन इति प्रोक्ता बुधै द्वादश राशयः मेषोऽथ मिथुनं सिंहस्तुला धनुरथो घटः विज्ञेया।
विबुधैरेते क्रूराः षडपि राशयः २ वृषकर्कस्तथा कन्या वृश्चिको मकरस्तथा मीन एते षडपि च विज्ञेयाः सौम्यराशयः ४
मेषकर्कावथ तुला मकरश्चरराशयः वृषसिंहौ वृश्चिकोऽथ कुम्भश्च स्थिरराशयः मिथुनं कन्यका धन्वी मीनश्च द्विस्व
पुंसंज्ञा राशयः क्रूराः स्त्रीसंज्ञा सौम्यराशयः ॥२

भावकः मेषोथवृषभस्सिंहोपराई स्त्वधनुस्तथा मकरश्च बुधैर्ज्ञेयाराशयोमीचतुष्पदाः कर्कटोवृश्चिकश्चोभौवहुपादौप्र
कीर्तितौ कुम्भमीनावुभौराशीविज्ञेयौपादवर्जितौ मिथुनश्चतुलाकन्यापूर्वार्द्धंधनुषस्तथा राशयोद्विपदा प्रो
क्तायवनाचार्यसूरिभिः मेषश्चसिंहधनुषोविज्ञेयावह्निराशयः वृषकन्याथमकरस्सुरेनेभूमिराशयः मिथुनश्च
तुलाकुंभोराशयः पवनात्मकाः कर्कवृश्चिकमीनाश्चविज्ञेयाजलराशयः अर्द्धशब्दामृगः कुंभः कन्यास्तेन्वराशयः
तुलालिकर्कमीनाश्चविज्ञेयाः शब्दवर्जिताः मेषोवृषोथमिथुनःसिंहःशब्दान्वितोधनुः कर्कालिमीनावहुपत्याजि
त्मासघटकाःस्मृताः मध्यासिंहेणकन्याजतुलाचापास्तथाल्पकाः सूक्ष्माःसिंहधनुर्मेषाः प्रीतोष्मापित्तधातवः वृ
षकन्यामृगारूक्षाउष्मशीताश्चवातुलाः युग्मकुंभतुलाउष्माः स्निग्धागास्तुल्यधातवः कर्कमीनालयः स्निग्धाः शी
ताश्चश्लेष्मधातवः नृपविट्शूद्रभूदेवास्तथापूर्वादिकोदिशः मेषात्रिःपरिवर्तेनविज्ञेयाविबुधैःसदा पृष्ठोदयाः
कर्कमृगधनुर्मेषवृषाश्चमीशेषाःशीर्षोदयाज्ञेयाउभयश्चझषःस्मृतः शीर्षोदयादिनवलाः शेषारात्रिवलाःस्मृताः
राशेःस्वनवभागोपःसनुवर्गोत्तमाह्वयइति अथराशिवर्णानाहसमरसिंहः अरुणासितहरितपाटलधूसरविपांडुर
विचित्राः सितनिहेमद्युतिपिंगाःकर्बुरवभ्रूराजादिवर्णाःसुरिति अथराशिषुविषमोदयत्वसमोदयत्वमुक्तं समर
सिंहेनेवविषमोदयामृगाद्याः षट्हृस्वत्वेनकालमानस्यकर्काद्याः षट्दीर्घत्वात्समोदयाश्चजतुलेचसमाने

यद्यपि स्वल्पास्सभेदेंशे कालस्य ह्रस्वदीर्घत्वं न संभवति तथापि बहुस्सभेदे शेनत्वं भवत्येव तद्यथा यत्राक्षभा
द्वादशांगुलाः तत्र मकरादीनामुदयपलानि म· २८३ कुं २२४ मी १५८ मे १५८ वृ २२३ मि २८३ कर्कादीनामुदयपलानि
च क ३६३ सिं ३९५ कं ३९८ तु ३९८ वृ ३९५ ध ३६३ अत्र मकरादितः कर्कादीनामुदयपलानि वृद्ध्यधिकानीति ज्ञेय ए
षां प्रयोजनमाह समरसिंहस्य बृहज्जातसमो — इयानां राशीनां मध्यगो विधुरहिं यदि यानि तत् दशाद्द्विवर्षैस्याद्धान्य
याद्बानिरिति मेषादिराशीनां संज्ञान्तरमुक्तं वराहेण क्रियताबुरिजितुमकुलीरलेयपाथोयजूककौर्पाख्याः तौसिक
आकोकेरोहृद्रोगश्चान्त्यभं चेत्थं केंद्रादिसंज्ञा उक्तास्तेनैव कंटककेंद्रचतुष्टयसंज्ञा लग्नास्तदादशमचतुर्थानां सं
ज्ञापरतः पणफरमापोक्लिमसंज्ञितञ्चतत्परतः ग्रहाणांमूलत्रिकोणगृहाणि तेनैवोक्तानि सिंहो वृषः प्रथमषष्ठह
यांगतौलिकुंभास्त्रिकोणभवनानि भवंति सूर्यादितिइति राशिस्वरूपम् अथ राशिस्वरूपप्रयोजनम् तत्र द्विपदच
तुष्पददिनरात्रिसंज्ञाराशिस्वरूपप्रयोजनन्वक्ष्यमाणभावफले ज्ञेयम् पुंस्त्रीराशिप्रयोजनम् पुंखेटाः पुंराशौव
वलिनः स्त्रीग्रहाः स्त्रीराशौवलिनः इति स्थानवले ज्ञेयम् पित्तोष्णशीतादिप्रयोजनम् रोगकर्तायत्रराशौ वित्याद्दिष
शुभावेरोगस्थितिज्ञानार्थम् राशिदिगप्रयोजनम् यात्रायांदिगज्ञानार्थम् चरराश्यादिप्रयोजनन्त्वरोदये भोजनमे
कवारमित्यादिभोजनविचारे ज्ञेयम् राशीनान्त्वलादिचारित्वप्रयोजनन्त्वाखेटकेजलाखेटमाहुः सर्वार्थ्ये ग्रह।

स्त्रैर्जलाख्यैरित्यत्र ज्ञेयम् वह्न्यादिराशिप्रयोजनमस्तु मभावे शिखिराशौ वह्निभयमित्यादिस्थले ज्ञेयं ब्राह्मणादि-
जातिक्रूरसौम्यत्वादिप्रयोजनम् लग्नानुमानवसतोवयः प्रमाणाच्च जातयो ज्ञेया इत्यादि समरसिंहोक्तं ज्ञेयम् यथा
ममास्मिन्वर्षे केन लाभो भविष्यति इति विचारे लाभभावलग्नसमवर्णो न तत्क्रूरसौम्यादिप्रकृतिसहितेन तत्समसन्ना
नेन तत्समवहुजल्पकेन तत्समवर्णादिकवस्तुलाभो वाच्यः इति राशीस्वरूपप्रयोजनम् अथ ग्रहस्वरूपं उक्तं च यथा
देवेन रविविधुक्षितिजो बुधवाक्पतिभृगुशनैश्चनमाशिखिनो ग्रहाः नवसदाभ्रमणाद्गगने नृणाम् ददति धातुसम
म्फलमुक्तवदिति वामनोपि रव्यादयो ग्रहास्सप्त सदसत्फलदायकाः सून्याफलविशेषस्य ज्ञानार्थं राहुरष्टमः इति ग्र
हस्वरूपमुक्तं त्रैलोक्यप्रकाशे भार्गवेन्दू जलचरौ तज्जीवौ ग्रामचारिणौ राहुक्षितिजमन्दार्का अनुवने गगनचारिणः
प्रभात मिन्दुजगुरू मध्याह्ने रविभूमिजौ॥ अपराह्ने भार्गवेन्दू सन्ध्यामन्दभुजङ्गमौ पित्तप्रभाकरक्ष्माजौ श्ले-
ष्मा भार्गवशीतगू जगुरू समधातू च पवनौ राहुमन्दगौ कुजार्कौ कटुकौ जीवो मधुरस्तुवरो बुधः क्षारास्त्व चन्द्रभृ
गुजौ तीक्ष्णो सूर्यार्कनन्दनौ॥ स्थूलश्चन्द्रः सितः खंडश्चतुरस्त्रो कुजोश्मगू वर्तुलो सौम्यधिषणौ दीर्घौ शनिभुजं
गमौ खण्डोर्द्धचन्द्राकारः विप्रौ शुक्रगुरू क्षत्री कुजार्कौ शूद्र इन्दुजः इन्दुर्वैश्यस्स्मृतो म्लेच्छौ सैंहिकेयशनैश्चरौ
रक्तवर्णः कुजः प्रोक्तो धिषणः कनकद्युतिः शुकपिच्छसमस्सौम्यो गौरकान्तिस्तु भार्गवः मंदाराकस्य पुष्पेण समद्यु

तिरश्चोऽसृग्गुः कविरत्यंतधवलः फणी कृष्णः शनिस्तथा अवनीशो दिनमणिस्तपस्वी रोहिणीप्रियः स्वर्णकारः सितेः पु
त्रो ब्राह्मणो रोहिणीभवः वणिग्गुरुः कविर्वैश्यो वृषलस्सूर्यनंदनः सैंहिकेयो निषादश्च सर्वकार्येषु सम्मतः युवा कुज
शिशुः सौम्यश्शशिशुक्रौ च मध्यमौ मार्तंडमंदद्वैज्यफणिनः स्थविरा ग्रहाः जीवमंगलमार्तंडा नु शनिपुरुषा बु
धाः सोमसोमजमंदाहि भृगुपुत्रा हि योषितः शुक्रचंद्रे भवेद्रौप्यं बुधे स्वर्णं मुदाहृतम् गुरौ रत्नयुतं हेम सूर्ये मौक्तिक
मुच्यते भौमे त्रपुः शनौ लोहं राहावस्थीनि कीर्तयेत् ग्रहाणां क्रूरसौम्यत्वमुक्तं वामनेन जीवेंदुसौम्यशुक्राः स्युः सौ
म्याः क्रूरा ग्रहाः परे क्षीणेंदुः क्रूरयुक्तो ज्ञो राहुः क्रूरः प्रकीर्तिताः खग्रासरोमंदोऽथ मज्ञास्त्रौ भास्करप्रभुः कुजो रक्ता
स शुक्रस्य भार्गवो मेदसः शशी रविः शुक्रो धरासूनुः स्वर्भानुः सूर्यनन्दनः चन्द्रो बुधः सुरगुरुः प्रागादिदिगधीश्वराः सूर्येदुजीवाः
सत्त्वाख्यास्तु शुक्रौ च रजो गुणौ स्वर्भानुभौमरविजास्तमोगुणमयाः स्मृताः विनष्टादिग्रहलक्षणमाह च ढुंढिराजः क्रूरदृष्टो युतो
वापि क्रूराक्रांतो विरश्मिकः स विनष्टो भवेत्खेटो विस्तारोऽत्र निरूप्यते राहुणाक्रान्तदेहौ तौ दिवाकरनिशाकरौ जितः क्रू
रेण यः खेटस्समराशिस्थितो पि वा पापाक्रान्तस्स निर्दिष्टस्समांशे क्रूरसंयुतः अन्तरालविहीनो यो रक्षापश्च निपूर्णो
यासन्नेयः पापसंदृष्टो रश्मिहीनोऽर्कमध्यगः अथ ग्रहस्वरूपप्रयोजनम् तत्र ब्राह्मणादिजातिज्ञानं नक्षत्राक्षरणादि
जातिज्ञानेह द्रुतादिविषयो ज्ञानं ग्रामादिनिवासज्ञानं वातादिप्रकृतिज्ञानं चतुरस्रादिआकृतिज्ञानम् पुमान् स्त्री चेति ज्ञान पत्री॥ ८ ॥

जनं ममकार्यमस्मिन्वर्षेकेनभविष्यतीतिप्रश्नेवर्षलग्नेशसमजात्यादिकेनवर्षेशसमजात्यादिकेनवामनुष्येणवाकार्यं
ज्ञेयम् कटुकादिरसज्ञानम् तुर्यस्थखेटवशतोभोज्यान्नेरसमादिशेदित्युक्तं स्वर्णादिद्रव्योक्तिर्वर्षे सबलग्रहस्य
द्रव्यलाभोनिर्बलग्रहस्यद्रव्यहानिरित्याद्यर्थं प्रभातादिकालोक्तेर्भोजनविचारेकालज्ञानार्थम् ग्रहवर्णप्रयोजनम्
वर्षेसबलग्रहवर्णवस्तुलाभो निर्बलग्रहवर्णवस्तुहानिरेतज्ज्ञानार्थम् एवमन्यदपिज्ञेयम् इतिग्रहस्वरूपम् अ
थवर्षप्रवेशवेलानयनम् तत्साधनमुक्तंयादवेन शकोवर्तमानोजनुः शाकहीनोगतात्वाभवेयुस्तस्तुर्धानिधेयाभुवा
१वाणाचंद्रै १५ रिलारामतुल्यै ३१ रिलापावकै ३१स्ताडितास्तेविधेयाः जन्मवारघटिकापलयुक्ताः षष्ठ्युपर्युपरिगं
दिवसाद्यं सप्तमशेषकमिदंदिनपूर्वास्वागताभवतिहायनवेला अत्रैवसुगमोपायउक्तोदैवज्ञचक्रचूडामणिभिरस्मद्गु
रुज्येष्ठभ्रातृभिः श्रीमन्नीलकण्ठदैवज्ञैः गतास्समाः पादयुताः प्रकृतिघ्नसमागणात् खवेदाप्त ४० घटीयुक्ताजन्मवारा
दिसंयुताः अब्दप्रवेशोवारादिसप्ततष्टेत्रनिर्दिशेत् प्रकारान्तरमुक्तंग्रहज्ञाभरणे इष्टः शकोजन्मशकेनहीनस्त्रिधास्पा
दोदलितश्चसाद्रै पृथक्स्तथाजन्मगवारपूर्वैःस्फुटाभवेदब्दनिवेशवेलाइति एवंवर्षप्रवेशकालताजिककर्तृभिरनेक
प्रकाराभिहितास्तेप्रयोजनाभावाद्ग्रन्थबाहुल्यभयाच्चनलिख्यन्ते अथात्रात्रिजन्मनीष्टकालयोगेविशेषउक्तस्ताजिका
लंकारे निशिजन्मभवेद्यदानदागतवारादिकमत्रसंयुतं दिनमानयुतस्सपाघटीपलपूर्वैरिहवासरोगतइति यद्वा।

रात्रिजन्मनि वर्षसंघोत्थघटीषु रात्रिगतघटिका योज्या तत्र वर्षलग्नस्य षष्टीकरणं स षड्भ्र सूर्यात्कर्तव्यं यतो गतघटिकाः
सूर्यास्ताद्याता इति अथवा वर्षसंघोत्थघट्याद्यभिष्टकालं प्रकल्प्य स जन्मलग्नं रविं प्रकल्प्य यल्लग्नं तत्तद्वर्षप्रवेशलग्नं
भवति एवं सकलगणकसार्वभौमश्रीमद्रामदैवज्ञा प्रविष्टो मा दृशैरनेके विशेषाः कर्तुं शक्यन्ते परं तु विस्तरभयादनु
द्योगः अत्रेदं ध्येयं यदि चैत्रादेरनंतरमपि मीनार्के जन्म तदा पूर्ववर्षशक एव जन्मशकः प्रकल्प्यः एवं जन्मार्कसम
भानुश्चैत्रादेरूर्ध्वं मेषादेः प्राग्भवति तदा प्रागब्दशक एवाभीष्टशकः प्रकल्प्यः मेषादेरूर्ध्वं त्वग्रिमशक एव ज्ञेयः अन्यथा
धिमाससंभवे कदाचिदेव चांद्रवर्षमध्ये हि वारं जन्मार्कसमभानोः संभवेन वर्षद्वयोत्थवारादिवैलक्षण्यमपेक्षितम
पिगतसमासाम्यात्स्यात् एवमधिमाससहितवर्षादग्रिमवर्षे कदाचिच्चांद्रवर्षमुल्लंघ्यापि जन्मार्कसमभानो जाते
सत्येकवर्षवारादिसमं वारादेरंतरं च स्यात् तस्मात्सौरवर्षादौ शकप्रवृत्तिर्ज्ञेयेति अत्र जन्मार्कतुल्योरवियस्मिन्मासे
भवति तस्मिन्नेव मासे वर्षप्रवेशो ज्ञेयः उक्तं च तिथ्यादिपत्रे जननार्कतुल्योरविर्भवेद्यत्र स एव मास इति तत्र जन्मार्क
समो रविर्यदि जन्ममासेनायाति परे पूर्वे वा मासे आयाति तदा जन्ममासस्त्वकरहितः एकयुक्तो वा कर्तव्य इति अथ वर्ष
ध्रुवकोपपत्तिः अत्र वर्षादिः साध्यस्तत्र सौरमेव उक्तं च सिद्धान्तशिरोमणौ वर्षायनर्तुयुगपूर्वकमत्र सौरादिति अत्र
थरवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टमिति तेनैवोक्तत्वाद्रविभगणभोगेन सौरवर्षो भवति तस्यस्पष्टगतेश्चञ्चलत्वात्सौरव

षीदिः कदा भविष्यतीति जिज्ञासायामन्यत्सोपलब्ध्या जन्मकालीनसूर्यतुल्यस्स्फुटो यस्मिन्दिने तत्र भगणभोगस्य
ज्ञातत्वाद्वर्षादिज्ञानं तस्य ज्ञाने उपायः यदि कल्पसौरवर्षैः कल्पसावनदिनानि लभ्यन्ते तदैकेन किमिति प्राप्ता व
कस्मिन्वर्षे गते सावनाहाः ३६५।१५।३१।३० वारस्यैकपेक्षितत्वादुपरिसप्तनष्टाः जाताः ०।१५।३१।३० अत्रानुपात
यद्येकस्मिन्वर्षे गते सावनाहाः तदा भुक्तायुर्वर्षैः किमिति अत्र गतवर्षाणि अनेन ध्रुवकेन ०।१५।३१।३०। चतुर्षु
स्थानेषु गुणयानिरूपेण भाज्यानि फलं जन्मसमयादारभ्य सावनदिनानीति अस्मिन् जन्मवारादियोगस्तु वर्षप्रवे
शे यदिवसघटीपलज्ञानार्थं कृतः अत्र पलघटीभ्यः षष्ट्या ऊर्ध्वं ईयोजनं पलघटीनां षष्ट्याधिकत्वाभावात्
कृतन्वारास्सप्तवातस्सप्तनष्टमित्युक्तम् एवं कृते तस्मिन् सावयवे दिने वर्षादिः स्फुटो भवतीत्युपपन्नम् अथैकवर्ष
प्रवेशादग्रिमाब्दादिप्रवेशज्ञानम् भू१ बाण विधु१५ भूराम३१ खाग्नि३० वारादिकेन युक्तवर्षमासदिनावेशोऽग्रिम।
स्यादिति श्रीशयुगिति ननु सौरवर्षात्सावनचान्द्रनाक्षत्रबार्हस्पत्यवर्षाणां सम्भवे कथं सौरमानेनैव वर्षप्रवेशोऽभि
हितः तत्रोच्यते चान्द्रसावनवर्षयोस्तु सूर्यस्य चन्द्रस्य वा साम्याभावात्त्यागः बार्हस्पत्यमाने तु जन्मकालिकराश्या
दिमध्यमगुरुणा भोग्यबार्हस्पत्यवर्षे यद्यपि गुरोरंशसाम्यं भवति तथापि राशिसाम्याभावात्त्यागः नाक्षत्रवर्षात्
यद्यपि चन्द्रसाम्यं भवति तथापि ग्रहाग्रेसरस्य ग्रहाणां नेतोदातुश्च रवेः सौरवर्षे राश्यंशकलाविकलासाम्याद्।

थवर्षायनर्तुयुगपूर्वकमत्र सौरादिति सिद्धान्तोक्तेर्यावान् जन्मनि भानुरित्यादिजीर्णताजिकोक्तेश्च सौरमानेनैव वर्षप्र
वेशकरणं युक्तम् अथ च मासैर्द्वादशभिर्वर्षमिति सूर्यसिद्धान्तोक्ते वर्षे भास्करत्वेन समावत्सरमासफलमादिशेत्
सुधीरिति जीर्णताजिकोक्तेश्च सौरमानेनैव मासप्रवेशोपि विधेयः ननु मासास्तथा च तिथयस्तु हिनांशुमानादिति सि
द्धान्तोक्तेर्मासप्रवेशे चान्द्रमासस्यैव मुख्यत्वमिति चेन्न यथा सौरमासप्रवेशे सूर्यांशसाम्यं ज्ञापकं न तथा चान्द्रमासप्रवे
शे किंचिदस्ति अथवा अधिमाससंभवे त्रयोदशमासानां सत्त्वात्पूर्वोक्तं सूर्यसिद्धान्तवचो लोकप्रसिद्धश्च व्याहन्येत।
तस्मात्सौरमानेनैव मासदिनप्रवेशादिकं विधेयमिति सिद्धान्तः अथ वर्षप्रवेशसमये स्वस्वाधीनसिद्धान्तकरणादिरी
त्या साधितोर्को जन्मकालीनार्केणावश्यं समो भवति इदमेव वर्षप्रवेशसमये प्रमाणम् उक्तं च समरसिंहेन या
वान्जन्मनि भानुस्तावान्वर्षे स्फुटस्तथैवमपि श्रीमन्नीलकण्ठज्योतिर्विद्भिरप्युक्तम् तत्कालार्को जन्मकालरविणा
स्याद्यनस्समश्चेति एवं निष्पन्नस्याब्दप्रवेशकालस्य स्पष्टीकरणमुक्तं हरिभट्टेन ताजिकसारे सूर्यो वर्षसमुद्भवो
न हि भवेज्जन्मार्कतुल्यो यदा तद्भुक्त्याविहृतं तयोस्तु विवरं लब्धं च हीनाधिकं वर्षावेशघटीपलेषु सततं वर्षा
र्के हीनाधिको जन्मोत्थे द्युमणौ हि वर्षसमयस्त्वेवमवेत्रस्फुटम् इति पार्थपुरनिवासिगणेशदैवज्ञेनाप्युक्तं ताजिकभू
षणे जन्मकालनलिनीविलासिना नैव याति तुलनां कुलासु चेत् वर्षकालनलिनीपतिस्तयोरन्तरं निहन्यतो निजम्

काव्यम्वर्षध्रुवेनस्मारसौख्यदः प्रजायतइति अत्रवर्षार्कजन्मार्कसाम्याभावात्कालस्पष्टीकरणमुक्तम् तत्रस्वा
धीतकरणात्स्वदेशपूर्वापरयाम्योत्तरादिकर्मसंस्कृतोजन्मकालीनस्पष्टार्कस्तत्करणाजातदेशान्तरादिसंस्कृतोवार्षि
कस्पष्टार्कोजन्मार्कसमोवश्यम्भवति तदासाम्यमनुसन्धेयमानम् अत्रधूलीकर्मणाप्यज्ञानमात्मनोदूरीकरो
त्वायुष्मान् एतद्गणितपूर्वकं सकलभूपालमूर्द्धमणिनीराजितचरणकमलानाम्भूमराडलाखण्डलानां श्रीसा
हिसूजामहाप्रभूणाम्मासप्रवेशानयनेलिख्यते अतष्कालस्पष्टीकरणमयुक्तम् अथयद्येवमुच्यते पूर्वोक्ता
नुपातसाधितत्वात् कल्पमध्यमभगणोत्थसायनध्रुवोपिग्रहवन्मध्यमस्तत्साधितवर्षकालस्यापिमध्यमत्व।
म्मध्यमस्पष्टीकरणमुक्तमेवेति तदपितथातः सौरवर्षान्तेसमुपचयापचयसाम्येनमध्यमध्यमस्यह्रासागतयो
स्तुल्यत्वात्सौरवर्षान्तः पातितमध्यमसावनध्रुवस्स्पष्टएव तत्साधितोब्दादिः सुतरांस्पष्टएवस्पष्टस्यपुनस्स्प।
ष्टीकरणान्नयुज्यते अतएवयावान्जन्मनिभानुरितिपद्येनताजिककर्तृभिर्ऋषिस्थानाभिषिक्तेनसमरसिंहेनव
र्षकालस्पष्टीकृतिंविनैवस्पष्टार्कसाम्यमुक्तंनतुमध्यमार्कसाम्यम् अतएवहरिभद्रगणेशदैवज्ञकृतंकालस्पष्टी
करणमयुक्तम् इदम्पुनरिहावधेयम् प्रतिवर्षमेककाकलायनांशगतिरितिजन्मनोभूयसिकालेगतेऽयनांशवशेनो
दयान्तरंचरान्तरयोर्वैलक्षण्यात्तत्संस्कृतस्तत्करणात्तद्देशान्तरादिसंस्कृतोपिवर्षार्कोजन्मार्कसमानभवतिनरथेनतुपा

तेनांतरं साध्यं तद्यथा यदि सूर्यस्य स्पष्टगतिकलाभिः षष्टिघटिकास्तदार्कांतरकलाभिः किमिति लब्धनाड्याद्येन वर्षावेश
कालः संस्कार्य इति तस्मात्तत्करणजस्तद्देशांतरभुजांतरसंस्कृतो भोग्यायनांशवशादुत्पन्नोदयांतरेण नहि शजपलभो
न्यतात्कालिकचरेण च संस्कृतो वर्षार्को जन्मार्कसमो यदि तस्मात्तदैव कालस्य स्पष्टत्वमन्यथा नेति सिद्धांतः श्रीमन्नी
लकंठदैवज्ञस्तु स्वल्पांतरत्वान्नोक्तमतो न कोपि दोषः अथ वर्षप्रवेशे तिथ्यानयनमुक्तं पद्धतिभूषणे समासमाजः
शितिकराद ११ निघ्नः समष्टि १६ भागेन समन्वितोसौ स्वजन्मतिथ्या च खराम ३० तष्टस्तिथिर्भवेद्दू १ नयुताकदाचि
दिति नक्षत्रयोगानयनमुक्तं ताजिकसारे व्योमेंदुभिः १० संगुणिता गताब्दाः खशून्यवेदाश्वि २४० लवैर्विहीनाः ज
न्मर्क्षयोगे सहिताः पृथक्स्था नक्षत्रयोगौ भवतो भनष्टौ २७ लग्नानयनमुक्तं पद्धतौ समासमाजस्त्रिगुणस्समानां
दशां १० शयुक्तो जनिलग्नयुक्तः सूर्यो १२ द्धृतः शेषसमं विलग्नं सामान्यतो माननमेरगादीनि अत्र तिथिनक्षत्र
योगा वर्षप्रवेशदिवसस्य प्रायो नैकट्येनायांति उक्तं च सुधानिधौ निष्पद्यते सदा ज्ञेयो वारास्सर्वे त्रहायने तिथी
भयोगास्तेऽप्यनुमानभयोगयोरिति लग्नमपि कालं नैकट्ये समायातीति ज्ञेयम् तत्र संक्रांतिज्ञानार्थं दैवज्ञमुकुटा
लंकाराणां सकलगणकसार्वभौमानामस्मद्गुरुचरणानां श्रीरामज्योतिर्विदाम्प्रयाति शाके द्रुस्वेषु मही १५२९
विहीने त्रिस्थे सपादे हलिते च साहे खे०नाष्टवेदैः ४८ द्धतिभिः २० क्रमेण युक्ते द्विनष्टे क्रियसंक्रमस्स्यात् ॥

न्यथैकस्मिन्मेषसंक्रान्तौ ज्ञानायां नदग्रिमसङ्क्रान्तिज्ञानार्थं सूत्रम् दस्रौ २ शैलशरा ५७ रसा ६ गुणयमा स्त्रीणि ३द्व
यं २ षट् ६ वियद्रामा ३० द्वौ २ खगुणाः ३० कृता ४ रसशराः ५६ षट् ६ नागवेदा ४८ क्रमात् भूमिः १ सप्तदश १७ द्व
यं २ रसगुणा ३६ वेदा ४ स्त्रयं ३ मार्गणा ५ स्त्रसा ५३ वासरनाडिकास्त्वजदिनाद्ये योजितास्तु हेषान् अथ संक्रान्तितिथि
ज्ञानोपायं शाकेनाब्धिति १५२१ न्यूने रुद्र ११ रामे ३ र्गुणाश्रु भिः ५३ निघ्नो रुद्रान्विते खाग्नि ३० तष्टो मेषाद्दजास्तिथिः १
द्विर्वेदा ४ गा ६ ष्ट ८ दि १० गुद्रा ११ ग्रेना स्यादन्यसंक्रमे द्वि २ द्वि २ द्वि २ द्वि २ भूमि १ वीयुक्ता वुद्ध्या क्रमात्यरा इति अथ वर्ष
प्रवेशे संक्षिप्तपञ्चाङ्गफलमुक्तं त्रैलोक्यप्रकाशे नन्दा भद्रा जया पूर्णाः शुभ
दास्तिथयो मताः हा दस्याद्यामरिक्ता च न शुभा वर्षवेशने १ सोमो बुधो गुरुः
शुक्रो वारश्च त्वार उत्तमाः भौमार्कशनिवाराश्च वर्षे हानिभयप्रदाः २ अ
श्विनी मृगशीर्षं च हस्तः पुष्यः पुनर्वसुः स्वातिश्च रेवती चैव वर्षवेशे शुभा
वहाः ३ कृत्तिका रोहिणी चार्द्रा ज्येष्ठा मूला स्त्र्यन्तारकाः श्रवणश्चानुराधा च
मध्यमू वै नत्रयम् भरणी च मघा चित्रा विशाखा शततारकाः धनिष्ठाश्लेषिका प्रोक्ता वर्षवेशेति निंदिता विरुद्धयोगो
विष्टा च वर्षवेशे न शोभन इति अत्र विशेष उक्तो दीपिकायां जन्मर्क्षयुक्ता यदि जन्ममासे यस्याद्ध्रुवं जन्मतिथिर्भवेच्च।

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी | राशि |
| ० ० ० | ०२ ५७ | ०६ २२ | ०३ ०२ | ०६ ३० | ०२ ३० | ०४ ५६ | ०६ ४८ | ०१ २७ | ०२ ३६ | ०४ ०३ | ०५ ५३ | वार घटी |
| ० ० | २ | ४ | ६ | ० | १० | ११ | ११ | ११ | ११ | ११ | ११ | ति |

भवन्ति नद्दा सरएवनिमग्नैः राज्यसौभाग्यसुखानि तस्य कृतान्तकुजयोर्वीरे यस्य जन्मदिनमाववेत् अनृसयोगसम्भ्रा
प्तोविघ्न— स्तस्य पदे पदे नक्रस्समनृसंकृतान्तप्रशान्तिः लग्नस्शुभाशुभफलमुक्तं हायनसुन्दरे शुभग्रहयुते सौम्ये वर्ष
स्वामी दृशायुते रोगोद्वेगापदान्नाशस्सुतदारादिसम्पदः देशभूम्यर्थलाभस्याद्दानाभोक्तानृपप्रियः सौख्यञ्च विपु
लावृद्धिर्वर्षलग्नेशुभेशुभम् क्रूरवर्षेक्रूरयुक्ते क्रूरस्वामिदृशायुते रोगोद्वेगोभयन्दुःखंज्वरो हानिर्दरिद्रताराज्य
भङ्गन्तथोदासंस्वबन्धुकलहं कुले स्थानभ्रंशमवाप्नोति वर्षलग्नेशुभेशुभमिति अथ वर्षप्रवेशेशुभाशुभफलज्ञाना
र्थं समुद्रचक्रमुक्तं विष्णुयामले तिर्यगूर्द्धगता रेखाश्चतस्त्रस्तत्र संलिखेत् कृत्तिकादीनि ऋक्षाणि पूर्वोब्धेः सव्यमा
र्गतः मध्या श्च सागराख्यातास्तीरे सागरपार्श्वयोः चत्वारः पर्वताः कोणाः पूर्वादिविदिशि क्रमात् त्रिभिस्सागरे द्वेमेके
कन्नीरकाष्टके कोणे द्विभन्द्विभमध्यादष्टाविंशतितारकाः यत्रस्याज्जन्मनक्षत्रन्ततो वर्षफलं लभेत् मासास्तु व
र्षान्मासाच्च दिनानि हि भवन्ति वै दुःखसमुद्रे सुखमेव तीरे शैले श्रियं संलभते मनुष्यः जन्मर्क्षयोगे चेद्भवतीह वर्षन्तत्रापि
दुःखं किल विष्णुनेत्रेद्गति अथ वर्षप्रवेशे शुभाशुभफलज्ञानार्थं त्रिपताकचक्रमुक्तम्मुक्तावल्याम् रेखात्रयन्तिर्यगधोर्द्ध
संस्थमन्योन्यविद्धाग्रगमेककोणात् स्मृतं बुधैस्तत्त्रिपताकचक्रम्प्राक्प्रमेखाग्र— गवर्षलग्नात् १ न्यसेद्धचक्रं कि
लतत्र सैकं यातानाह्संख्या स्त्रिभिर्भजेन्न भोगैः शेषोन्मिते जन्मगचन्द्रराशेस्तुल्ये च राशौ विलिखेच्छशाङ्कम् २ परे चतुर्भो

| | | | | |
|---|---|---|---|---|
| पर्वत पु· पु | नीर आ | सागर मृ· रोह | नीर भर | पर्वत अ· रे· |
| नीर श्ले | समुद्रचक्रम् | | | नीर उभ |
| सागर स· मृ· उ· | | | | सागर ध· श· पू· |
| नीर हस्त | | | | नीर अश्व |
| पर्वत वि· स्वा· | नीर विशा | सागर अनु· ज्ये· मू· | नीर पूषा | पर्वत उ· अभि· |

जितशेषतुल्येस्थानेस्वराशौरवचरास्तुलेख्याः स्वभानुर्विद्धे हिमगौतुकष्टन्नापोर्क
विद्धे रुगिनात्मजेन ३ महीजाविद्धेतुशरीरपीडाशुभेश्चविद्धेजयसौख्यलाभः शुभाशु
भव्योमगवीर्येतोत्रफलञ्चवर्षस्यवदन्तुधीमान् ४ इति चक्रे मेषराशिरूपलक्षण
म् मेषस्थानेवर्षलग्नंज्ञेयम् अथात्रप्रसंगाद्वर्षशुभाशुभफलज्ञानार्थंस्वज
न्मलग्नान्मेषसंक्रमणात्लग्नफलंप्रश्नवैश्चवोक्तंलिख्यते जन्मोदयाद्वास्वदजप्र
वेशलग्नंहि यद्भावगतंशुभान्वितम् तद्भाववृद्धिम्प्रकरोतितस्मिनवर्षेनृणाम्पा
पयुतन्तदन्यथा जन्मोदयेदेहसुखन्धनेर्थलाभस्तृतीयेचकुटम्बवृद्धिः तुर्येसु
हत्सौख्यमथात्मजाप्तिः पुत्रेऽथषष्ठेरिपराजयस्स्यात् १ स्त्रीसौख्याप्तिर्भवतिमदनेमृ
त्युरुग्भीश्चरन्ध्रे धर्मार्थाप्तिस्तपसिदशमेवित्तसौख्यास्पदाप्तिः लाभेलाभस्सुखधनचयौदुःखदारिष्फमन्तेपुंसांमे
षप्रविशतिरवौजन्मलग्नादिलग्ने इति २ एतत्फलंसौम्ययुतेज्ञेयम्पापयुतेसर्वंविपरीतम् मिश्रयुतेमिश्रंज्ञेयमिति
मेषप्रवेशलग्नस्यजगल्लग्नेतिनामयवनावदन्तिवर्षलग्नादपिजगल्लग्नविचारोयमुक्तोयत्राधिकारे जन्मलग्नाद्व
र्षलग्नाज्जगल्लग्नंयदाभवेत् अष्टमेद्वादशेवापिसवर्षोनशुभावहः १ अन्योपिविशेषस्तत्रैव अष्टमेद्वादशेवा

पिभवेद्यत्सुरराशिनः ज गच्छन्नत्ताहानिस्तत्सुरस्य न संशय इति अथ जन्मकाले येन सिद्धान्तेन करणेन वा सकरन्द सारु




विनोदादि सारणीग्रंथेन वा ग्रहाः षट्कर्मसंस्कृता साधितास्तेनैव वर्षप्रवेशेपि उदयान्तरा।
दिषट्कर्मसंस्कृतास्स्पष्टा ग्रहास्तद्गतिकास्साधनीयाः उक्तञ्च पद्धतौ अब्दप्रवेशे खचरास्त
चाराः करणान्निजात् साधनीया विलग्नञ्च स्पष्टकार्यं निजोदयैः १ तेग्रहास्स्पष्टा एव उक्त
ञ्च भास्कराचार्यैः यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलं स्फुटत्वमिति अत्रादि
शब्दे नवर्षप्रवेशादौ ज्ञेयम् ताजिकसारेपि विना ग्रहैः स्पष्टतरैर्न किंचित्फलं प्रवक्तुं विततरां
क्षमस्स्यादिति अथ ब्रह्मसौरार्यादिपक्षाणां सत्त्वात्कस्मिन्पक्षे ग्रहास्साध्या इत्युक्तं द्वामो
दरपद्धतौ यान्ति संसाधिताः खेटा येन दृग्गणितैक्यताम् तेन पक्षेण तत्कार्याः स्फुटास्तत्समयोद्भवा इति ननु ग्रहान
यनमार्षशास्त्रादेव कर्तुं युज्यते न तु मनुष्यात् तस्याऽयथार्थत्वादिति चेत्सत्यं ग्रहानयनं मुनिकृतशास्त्रादेव कर्त्तुं यु
क्तम् परन्तु तत्रापि कालवशेनान्तरं स्यादिति १ उक्तञ्च सूर्यसिद्धान्ते शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः यु
गानां परिवर्त्तेन कालभेदोत्र केवलमिति वशिष्ठसिद्धान्तेपि इत्थं माण्डव्य संक्षेपादुक्तं शास्त्रं मया दितम् विस्तृतो
रविचन्द्राद्यैर्भविष्यति युगे युगे विस्तंसनस्विस्तृतिः शिथिलत्वमिति यावत् सिद्धान्तसुन्दरेपि मुनिप्रणीतेम ।

नुजैः क्कचित्स्वदृश्यत्वेनान्तरम् तदानन्देव संसाध्यं नकार्यं सर्वमन्यथेति तदन्तरं बीजसंज्ञं ब्रह्मगुप्तमकरंदमिश्रादि
भिः स्वस्वतादिकाले लक्षयित्वा मुनिशास्त्रजनितेषु ग्रहेषु संस्कृतं तद्युक्तमेव तथा च ब्रह्मसिद्धान्ते संसाध्य स्पष्ट
तरं बीजं नलिकादियन्त्रेभ्यः तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशाविन्यलं अथ पञ्चाङ्गयन्त्रादेव नाल्कालिको
करणेन स्पष्टग्रहानयनमुक्तं श्रीमल्लल्लकरादिदैवज्ञैः गतैष्यद्विवसाद्येन गतिर्निघ्नी खषड् ६० हृता लब्धमंशादि
कं सोऽध्यं योज्यस्पष्टो भवेद्ग्रह इति अथ पञ्चाङ्गीयनक्षत्रादेवचन्द्रस्पष्टीकरणमुक्तं तैरेव गतर्क्षनाड्यः खरसेषु
॥६० शुद्धाः सूर्योदयादिष्टघटीषु युक्ताः भयातसंज्ञा भवतीह चैवं निजर्क्षनाड्यः सहितो भभोगः खषट् घ्नभया
याप्तभभोगाद्य तत्त्वतर्कं ६० घ्नाधिकेषु युक्तं हितिर २ घ्नम् तथाप्तशशी भागपूर्वस्तु भुक्तिः खखवाभ्राप्तं खेटाभ्र ८००
० भभोगेन भक्ता इति अत्रेदं ध्येयम् पञ्चाङ्गीयग्रहाः किं देशीया उत्पन्नश्च मनुष्यः किं देशीयः नहि सर्वदेशी
यमनुष्याणामेकदेशनिष्पन्नपञ्चाङ्गेन स्पष्टा ग्रहाः कर्तुं युज्यन्ते देशभेदेन देशान्तरभुजान्तरोदयान्तरचरप
लादिसंस्कारसद्भावात् यदि सर्वग्रहाणामन्यथादर्शनात् तस्मात्स्वस्पष्टग्रहसहितैस्तद्देशीयपञ्चाङ्गैः [illegible]त्वा
तद्देशीयमनुष्याणां स्पष्टा ग्रहाः कर्तुमिष्यन्ते न त्वन्यत्रेति ज्ञेयम् अथ लग्नादिद्वादशभावसाधनम् उक्तं [illegible]जा
तकसुधानिधौ जन्माद्यपृष्ठादिषु भासुभेषु भावा विधेयाः सुधिया यतोऽत्र तद्दर्शनेन वदिशन्ति नित्यं शुभाशुभं भाव

हा॰ भवंनभोगाद्गुणितंताजिकतिलकेपि भावसाधनमथाभिधीयतेहायनोन्यफलनिर्णयहेतोः प्रश्नयानजनिवर्षवेश्म
र॰ नेभावसाधनमथ्यादिकारणमिति भावानांनामान्युक्तानिताजिकमुक्तावल्यां तनुर्धनंभ्रातृसुहृत्सुतारिस्त्रीरंध्र
१२ धर्माः क्रमशोविलग्नात् व्यापारलाभव्ययसंज्ञकाश्चसंज्ञान्तरगन्यास्तुरिमेकृतुल्याइति अत्रलग्नादिभावा
अन्वर्थसंज्ञाज्ञेयायथादेहविचारोलग्नात् द्रव्यविचारोद्वितीयादेवंसर्वत्र एतत्सविशेषंभावविचारेवक्ष्या।
मः तत्रभावानयनोपायमुक्तं त्रिचरखंडदिनार्द्धानयनंस्यात्सायनेर्कैतनुलादियातेशंकु १२ प्रभास्वघुदलेस्मा।
भासा त्रिधास्सभादिगजदिग्विघ्नीस्तस्याः त्रिहृत्स्युश्चरखंडकानि स्यात्सायनोष्णांशुभुजर्क्षसंख्यचरार्द्धयोगोल्ल
वभागयघातात् स्वाप्याप्तियुक्तस्तुचरंपलादि षष्ट्याविभक्तंघटिकादिकंस्यात् चरेणसंयुतोनाश्चकर्तव्यातिथिना
डिकाः मेषजूकादिषड्क्रमसायनेसोदिवादलोदिनार्द्धं त्रिंशतःशुद्धशेषंरात्रिदलंभवेत् अथनतादीनामानयन
मुक्तंसकलसिद्धांतमंडलीसरोविहरणराजहंसगणितविद्याचातुरीनात्रिकपंचाननाहिगवीप्रवीणैः पद्धतिचिंता
मणौतत्रादौनतोन्नतानयनंदिनार्द्धंद्युगरात्रिगतावशेषनाड्योनतंपश्चिमपूर्वकंस्यात् द्युयातहीनंद्युदलंन
तंप्राक्द्युखंडहीनेद्युगतेपरंतत् अथानयनांशानयनं भूनेत्रवेदो ४२१ नशकोदशांशहीनः खषड्भिर्विहृतो राम
यनांशाः त्रिघ्नोर्कराशिःस्वदलेनयुक्तस्तावन्मितामिर्विकलाभिराढ्याः अथस्पष्टलग्नानयनंतत्रस्पष्टल ६ ॥ । १२

ग्रानयनोपयुक्तं स्वोदयसाधनं ब्रह्मतुल्ये लंकोदया नागतुरंगदस्रा गोकाग्निनो रामरदा विनाड्यः क्रमोत्क्रमस्था २७८।
२९९।३२३।३२३।२९९।२७८ खररवराडकैः स्वैः क्रमात्क्रमस्थैश्च विहीनयुक्ताः मेषादिषण्णामुदयाः स्वदेशे तुलादि-
तोमीच विलोमसंस्थाः १ अथ लग्नसाधनम् तत्कालार्कस्सायनस्स्वभोग्यं भोगैर्निघ्नः स्वोदयः स्वाग्निभक्तः भोग्य
त्र्यंत्यादिष्टनाडीपलेभ्यः शेषादग्यान्स्वोदयांश्चावशेषम् त्रिंशन्निघ्नमशुद्धाप्तभागाद्यमेषपूर्वकैः अशुद्धान्त्रा
गृहैर्युक्तं लग्नस्याद्ययनांशकम् १ भोग्याल्पकालात्स्वत्रिघ्नात्स्वोदयाप्तलवादियुक् रविरेव भवेल्लग्नं सषड्भा-
र्कोन्निशात्तनुः अत्र जन्मदेशीयमेषादिलग्नमानैर्लग्नस्पष्टीकरणं कर्तव्यं न त्वन्यदेशोदयैरिति अथ धनर्णला-
लग्नानयने विशेषः सूर्योदयाद्यात घटीषु भोग्ये दिवावशेषे रसभार्कभुक्तैः निशागते व्यङ्गयुतार्कभोग्ये निशाव-
शेषे रविभुक्तभागैः गतागते राश्युदयैः स्वभोक्त्याल लग्नस्य नर्णसममेव भूयादिति अथ दशमलग्नानयनम् यु-
क्तायनांशार्कगतैष्यभागाः लंकोदयघ्नाः स्वगुणोद्धृतास्तत् स्याद्भुक्तभोग्यं नयनस्य नाड्यात्यलीकृतात् प्रागप-
रान्नतात्तत् क्रमाद्गतैष्यानुदयांश्च शेषमशुद्धहृत्त्वाग्निगुणं लवाद्यम् विशुद्धपूर्वापरभे विहीनयुक्तं स्वभं स्यादय-
नांशहीनम् लग्नं सषड्भमस्मदनाभिधानं तुर्याधस्याद्दशमात्सषड्भात् अथ पूर्वनतेपि धनलग्नानयनार्थ-
मदीयम्स्वनतम् प्राङ्नतस्योन्नतकालात् रविं कृत्वा सषड्भकम् लंकोदयैर्धनाख्येन क्रमेणास्तात्स्वभं स्फु-

हो·
र·
१३

टम् अथनतंविनैवलग्नादेवदशमलग्नसाधनमुक्तं विद्याहृन्द्दावने कृत्वालग्नार्दर्कवद्वात्रिखण्डंभूयोव्यस्तैस्तन्तु
दोभिर्विलग्नमत्रकर्डो ६ नेनेचततत्कालमेवंजायेयान्तोमत्तमध्याह्नलग्नेइति अथयमर्थः प्रथमंस्वाभीष्टकाले
स्वदेशीयोदयैर्लग्नंकार्यंततस्तदेवलग्नंदशमलग्नार्थंस्वयंकल्पयित्वाअयनांशाढ्यभानोरितिचरदलमा-
नेयम् ततश्चरपलयुतहीनानाडिकाः पंचदशाद्युदलमथनिशार्द्धं याम्यगोलेविलोममितिरात्रिदलमानेयं
ततोरात्रिदलमेवेष्टकालस्त्रकल्प्यप्रागानीतंलग्नमर्कंकल्पयित्वा व्यस्तैर्लंकोदयैरुक्तप्रकारेणानीतंलग्नंच
तुर्थलग्नंभवति अथतेप्रागतलग्नचतुर्थेषड्राशयूनेक्रमेण सप्तमदशमलग्नेभवेतां अथलग्नचतुर्थयोः सिद्धौ
ससंधिसर्वभावानयनेमत्कृतपद्यानि लग्नंचतुर्थात्संशोध्यशेषषड्भि ६ र्विभाजितम् राश्यादियोजयेल्ल
ग्नेसंधिस्याल्लग्नवित्तयोः सन्धिः षडंशसंयुक्तोधनभावोभवेत्स्फुटः धनभावः षडंशाढ्यस्सन्धिर्द्वितृतीययोः
षडंशसंयुतस्सन्धिस्तृतीयोभावउच्यते षडंशाढ्यस्तृतीयः स्यात्सन्धिर्भ्रातृचतुर्थयोः तृतीयसन्धिरेकाढ्यस्तु
र्यसंधिर्भवेदिह द्व्याढ्यस्तृतीयभावोपिपुत्रभावोभवेत्स्फुटः त्र्याढ्योद्वितीयसंधिःस्यात्संधिः पञ्चमभावजःधन
भावोवेदयुतोरिपुभावः प्रजायते लग्नसंधिःपञ्चयुतः सन्धिस्याद्रिपुभावजः लग्नाद्याःसंधिसहिताभावाः
षड्राशिसंयुताः सप्तमाद्याभवंतीहभावाः सर्वेससंधयइति अथकेवललग्नज्ञानादेवसकलभावराशिसाध

नार्थंसुगमोयायोमन्कृत स्वेष्टलग्नाद्दृश्यमाणविधिनाचरमानयेत् लग्नेमेषादिषड्भस्थेतेनोनाक्तिथिनाडिकाः
॥१ तुलादिषड्भे सहितानाप्रकल्प्यास्तेशकाः पुनःतेरंशैस्सहितंलग्नंलग्नसन्धिः प्रजायते तैर्युतोलग्नसंधि
श्चधनभावोभवेदिह तैर्युक्तोधनभावश्चधनसन्धिः प्रजायते तैर्युक्तोधनसन्धिश्चभ्रातृभावोभवेत्स्फुटम् तैस्संयु
तोभ्रातृभावस्सन्धिस्स्यात्सहजाभिधः तृतीयसन्धिस्तैर्युक्तस्तुर्यभावःप्रजायते पूर्वोक्तवत्समसंसाध्याश्शेषाः
भावास्ससन्धयः इतिभावविचारफलमुक्तंश्रीमन्नीलकण्ठदैवज्ञैः स्वेष्टसन्धिद्वयान्तस्थेफलंतद्भावजम्भवेत्
हीनेधिकेहिसन्धिभ्याम्भावेपूर्वापरेफलम् अन्यत्रापि आरम्भसन्धेर्ग्रहचरोपदोनःफलन्ददात्यादिमभावजातम्
विरामसन्धेरधिकस्तदानीमागामिभावोत्थफलप्रदस्स्यादिति अत्रेदमवगन्तव्यम् यदाकदाचिदेकराशिभोवह
येसमायाति अथवाएकराशिंपरित्यज्यावापाति तदाभावकुण्डल्यान्ताद्दृशएव राशयस्थाप्याः सन्धिराश्यादितु
ल्योग्रहः पूर्वापरभावसन्धिस्थरेखायामेवस्थाप्यः अथचभावकुण्डलीकेवलम्भावफलार्थमेवअन्यस्सर्वोपि
ताजिकविचारोग्रहकुण्डल्यैवविधेयइतिप्राञ्चः अथभावविंशोपकानयनमुक्तम्मुक्तावल्याम् ग्रहसन्ध्यन्तरं
भावसन्ध्यन्तरविभाजितम् लब्धंभावफलंज्ञेयंतत्त्रिभागोविंशोपकाः१ अत्रान्तरकरणेविशेषउक्तःपद्धतौ आ
द्यसन्धिर्ग्रहाद्वावाच्छोध्योभावोनकेग्रहे भावस्थसन्धितश्शोध्योग्रहोभावस्तथाधिके भावनस्तुफलेस॰

वेंजन्मवर्षव्रतादिषु विंशोपकानुमानेनगमनम्प्रश्नवास्तुषु अथकीदृशोभावोग्रहसंयोगेनशुभाशुभंवाफ
लंप्रयच्छतीत्युक्तंताजिकतिलके निजपतिगुरुवित्सुरारिपूज्यैर्यदिसहितश्चविलोकितःसभावः अतिशयफ
लदोनशेषखेटैरथसहितस्त्ववलोकितोविशेषैः अत्रवक्ष्यमाणभावबलेसबलभावस्यफलदातृत्वंनिर्बल
स्यनैवेतिज्ञेयं अथयास्माद्ग्रहाद्यंग्रहः कस्मिंस्थानेस्तीतिज्ञानार्थंयवनमतेनद्वतरेतरसंख्याउक्ताचिंतामणौ ॥
अर्कादिभ्यश्चेद्धपूर्वान्सलग्ना स्यन्काशेषाधोलवाः पञ्चभूम्यः चेन्न्यूनास्तच्छोधितात्सुद्धिमान्स्यात्तस्मि
न्राशावन्यथाभेपरस्मिन्निति इतिदैवज्ञवर्यपण्डितदामोदरात्मजबलभद्रविरचितेहायनरत्नेग्रहरा
शिस्वरूपवर्षप्रवेशाद्यानयनाधिकारःप्रथमः १ अथग्रहाणांदृगध्यायोनिरूप्यते तत्रदृष्टिप्रयोजनमुक्तंताजि
कालंकारे नभश्चराणांनप्रोक्तंयावद्दीक्षणलक्षणं तावन्नशक्यतेवक्तुंफलंवर्षेशुभाशुभमिति योगसुधानिधा
वपि प्राप्तेकरेणाप्यखिलेर्थजातेपुरोगतेभ्राम्यतिदृष्टिहीनः तथापदिष्टेपफलेविनेक्षणंवदामिदृष्ट्या
नयनंततोहमिति तत्रग्रहाणांचतुर्द्धादृष्टिः एकाप्रत्यक्षस्नेहासमस्तलोकसमक्षस्नेहदा द्वितीयागुप्तस्ने
हान्यप्रत्यक्षस्नेहकारिका अकथितमेवेष्टकार्यसंसिद्धिदा तृतीयागुप्तवैरान्यप्रकाशितशत्रुभावकारिका
चतुर्थीप्रत्यक्षवैरा आसांलक्षणंदृष्टिपरिमाणंचाहसमरसिंहः नवपंचमयोर्९५ दृष्टिःपादोना ४५सवे

दृष्टिनः सबला मेलापकदृष्टिरियंप्रत्यक्षस्नेहदृष्टिश्च तृतीयैकादशयोः ३।११ दृष्टौयोवीक्षते तृतीयदृशा तद्दृष्टि
स्त्रिंशोना ४० न्यस्यतु षड्भाग १ दृष्टिश्च अनयोर्गुप्तस्नेहा दृष्टिः सर्वत्रकार्य्यसिद्धिकरी अन्यस्यै कादशस्थानदृष्टुः द
शम चतुर्थे १०।४ दृष्टिः पाद १५ दृगिह गुप्तदुर्जनाख्या तु याचोभयसप्तमके सकला ६० प्रत्यक्षदुर्जनादृष्टिः सक
र्हस्थितयोरप्युभयोर्दृष्टिर्मता सकला ६० दृष्टिश्च साउभयसप्तस्वास्तु निजितस्नारिदृशः सुताख्यास्तु रिति विशदं
दृष्टिफलमाह वामनः पञ्चमे नवमे दृष्टिः सर्वसौख्यफलप्रदा प्रकटीकुरुते ह्येषा मित्राणि स्वजनास्तथा तृती
यैकादशे दृष्टिः सदा स्नेहप्रवर्द्धिनी सुतसन्तोषदा भव्या ह्यायुर्वृद्धिधनप्रदा चतुर्थे दशमे दृष्टिर्गुप्तदुर्जनभेदिका
मित्रघातकरी दुष्टा शोकसन्तापवर्द्धिनी उभयोः सप्तमा दृष्टिः प्रकटारिप्रभेदिनी विवादं विग्रहं युद्धसंकटं च करो
तिहि एकर्क्षे वलिनी दृष्टिः प्रधान्यात्कार्य्यसाधिनी स्वस्थाने फलदा ज्ञेया मित्रपक्षात थैव च तृतीयैकादशे पाद
।१५ दलं व्योम चतुर्थयोः ३० त्रिकोणेत्र्यंघ्रि ४५ मृत्यस्थे पूर्णं पश्यति खेचरा इति अत्र वामनेन तृतीये त्र्यंशोना
।४० एकादशे षड्भ्य १० गमिता चतुर्थे दशमे पादमिता १५ दृष्टिरुक्ता तत्र मूलभूतस्य समरसिंहस्य विरुद्धा ह्यनेक
ताजिकग्रंथादौ मूलं मृग्यमिति ताजिकसारे पि पादन्त्रिकृद्धे स्वदलं खतुर्ये पादत्रयं स्यान्नवपञ्चमे पि पश्यन्ति पू
र्णां समसप्तके च ग्रहा न्यचान्यत्र विलोकयन्तीति अत्रैकर्क्षे समरसिंहेनाशुभा दृष्टिरुक्ता वामनेन शुभा दृष्टिरुक्ता अ

नयोर्वीक्षयोर्यथावस्था यौग्रहावेकस्थानगतौ उच्चस्वगृहगतौ वक्ष्यमाणमैत्रीचक्रेण प्रकारान्तरेण वा मित्रगृहगौ १०।
वास्यातामन्तरा तयोर्दृष्टिः शुभफलदात्री यदा तु समशत्रुनीचस्थेत्यादिगौ स्यातान्तदा तयोर्दृष्टिरशुभेति अथयवननामाद्वि
नादृष्टिः मुक्ताविरणास्याद्देकस्ये सप्तमे स्यान्मुक्ताविलानरवी दृक्चतुर्थे तु निस्वः प्रोक्ताभयप्रदास्तृतीये काद्दशे दृष्टिस्तदा प्रोक्ता
महोन्नमा नवपञ्चयोर्दृष्टिर्वेली प्रोक्ता महाशुभेति अथ दृष्टद्रष्टयोराशिभेदेऽस्यापि द्वादशांशमध्येन यो रवस्थाने दृष्ट
योर्यथोक्तफलदाय्यः स्युः द्वादशांशातिक्रमे तु साधारणफलदाय्यः स्युरित्युक्तं समरसिंहेन सर्वाण्येता हि दृशो १२ द्वादश
भागान्तरे भवेयुश्चेत् तन्नविशेषाज्ञेया दृष्ट्यानुसारात्फलं सर्वमिति वामनोपि दृष्टिस्थानेषु सर्वेषु द्वादशांशान्तरे स्थितः शी
घ्रग्रहाद्गृहोमन्दः शुभासाद्दृष्टिरुच्यत इति अत्र ग्रहाणां दीप्तांशमध्ये दृष्टिफलं पूर्णमित्युक्तं ताजिकरत्नमालायां दी
प्तभागस्थिताः सन्तो दृष्टिस्थानेषु चेत्स्थिताः तदा दृष्टिफलं पूर्णं प्रोक्तं यच्छन्ति खेचरा इति संज्ञातन्त्रेऽपरः पृष्ठस्वदीप्ता
शैर्विशिष्टदृक्फलं ग्रहः दद्यादतिक्रमे तेषाम मध्यमं दृक्फलं विदुरिति विशेषो मुक्तावल्यां शीघ्रखेचरतुरः स्थिरगामी
तस्य दृक्निगदिता विफलाऽसा अन्यथा भवति भाविफलाप्त्यै वर्तमानफलदा समगान्येति अन्योपि विशेषस्ताजिकसारे क्रू
रग्रहाश्चेत्स्वलदृष्टिसंस्थाः पापे नराः सौम्यदृशि स्थिताश्च यच्छन्ति ते दृष्टिफलं यथोक्तं फलं तदर्द्धं च विलोमसंस्था इति



यदा तु क्रूराः सौम्यदृष्टिविषये सौम्याः क्रूरदृष्टिविषये तदाऽर्द्धफलदातारः स्युः क्रूरसौम्ययोर्योगे चरणत्रयफलं ज्ञेयं पदाह

वामनः दुष्टदृष्टिस्थिताः क्रूराः सौम्याः सौम्यदृगाश्रिताः दृक्फुट्टतं फलं पूर्णं नृणां यच्छन्ति खेचराः व्यत्ययस्थाः फलस्यार्द्धं य
च्छन्ति ग्रहदृष्टिजं पादोनं सौम्यपापेभ्यः फलं ज्ञेयं विचक्षणैरिति विशेषान्तरमाह समरसिंहः चक्रस्य वामदक्षे दक्षिणदृष्टिर्ब
लीयसी ज्ञेयेति अत्र चक्रस्य वामदक्षिणलक्षणमुक्तं हिल्लाजेन यूना स्वराशिषट्कं वात्या स्वं चान्तरं लग्नात् वाह्याभ्यन्त
रयोरपि संज्ञोक्ता वामदक्षिणाख्यानुवामनोपि चक्राद्यं नार्दले दृष्टिर्ग्रहाणां स्याद्वामदक्षिणा ज्ञेयानाभ्यास्वले प्रोढा
वामदृष्टेः स्फुटदक्षिणेति अयमर्थः लग्नस्य ग्रहस्य भोग्यभागादारभ्य सप्तमभुक्तभागपर्यन्तं यावद्दृष्टिः सा दक्षिणा एवं
सप्तमाच्चलग्नं यावद्वामदृष्टिस्सा दक्षिणादृष्ट्यपेक्षया सबला ज्ञेयेति उदाहरणमाह समरसिंह भूकेन्द्रोपरि
दृष्टिर्मध्यास्त्वबलेति सर्वत्रेति ॥ ॥ अस्यार्थः दशमदृष्टेस्सकाशाद्भूकेन्द्रोपरि या दृष्टिस्सा सबला एवं सर्वत्र
ज्ञेयम् यथा सप्तमस्य ग्रहस्य लग्नाद्दशमे चतुर्थे च पादमिता दृष्टिरस्ति परन्तु चतुर्थे दृष्टिर्वामदृष्टित्वाद्दशम
दक्षिणादृष्ट्यपेक्षया इत्थशालादियोगेष्वन्ययोगेष्वपि वा सबला ज्ञेयेति अथ स्थानविशेषोक्तदृष्टे विंशोपफ
लनिर्णयार्थं स्पष्टदृष्टिकलानयनमुक्तं संज्ञातन्त्रे अपास्य पश्यन् निजदृश्यखेटात् द्वेकादिशेषे ध्रुवलिप्तिकास्स्युः
पूर्णा रवेदास्तिथयोसवेदाः खंषष्टिरभ्रं शरवेदसंख्याः तिथ्याः खचन्द्रा वियदभ्रतत्त्वशेषांशयातैष्यविशेषघा
तात् लब्धं खरामैरधिकोनकैष्यस्वर्णं ध्रुवेता स्फुटदृष्टिलिप्ता इति अथात्र सुगमोपायो मत्कृतः दृष्ट्याविहीन दृ

श्यस्य शेषतो दृष्टिरुच्यते एकशेषे विना राशिमंशार्द्धं दृष्टिरुच्यते द्विभे पञ्चदशोपेतं भागार्द्धं त्रिशेषके भागार्द्धं
त्रिंशता ३० युक्तं चतुर्थे स्वार्द्धसंयुतम् भोग्यांशा पञ्चमे द्विघ्ना भोग्यांशा दृष्टिरुच्यते षष्ठे द्विघ्ना भोग्यभागाः सप्तमे
स्वार्द्धसंयुताः भुक्तभागा भवेत् दृष्टिः कलाद्या नाजिकोदिता अष्टमाभ्यधिकम्प्रोह्य राश्याद्यम्भवराशितः शेषमं
शीकृतं द्वाभ्यां हतं दृष्टिस्तु जायते नवमे दशमे प्येवं शिवभे भुक्तभागका द्विनिघ्ना शून्यभे द्विघ्ना भोग्यांशा दृष्टिरु
च्यते अथास्मिन् दृष्टिगणिते स्थानदृष्टिम्बिनापि ग्रहाणां दृष्टिरायाति तद्यथा द्रष्टा भौमः ५।१५ द्रष्टा चन्द्रः ०
।१५ अनयोर्भयोर्यद्यपि षष्ठाष्टमस्थानदृष्टिर्नास्ति तथापि पूर्वोक्तगणितेनागता दृष्टिकलाः २० तत्र वक्ष्यमाणे
न्यशालादियोगे वर्षेशविचारे च अथ च योभाव स्वामि सौम्याभ्यां दृष्टो युक्तोपमे धन इत्यादि भावविचारे च स्था
न दृष्टेः प्रामाण्यम् गणितागत दृष्टेर्वा इति संशयनिवारणार्थं यथोभयोरैक्यम्भवति तथा दृष्टिगणितमुक्तं सुकाव
ल्याम् दृष्टदृश्यान्तरं शोद्ध्यम्भतुल्ये १०।२ भागाद्यधो नेत्र २ हृतं तिथि १५ भ्यः अङ्कै २।९ खरामे ३० भ्यः भाः श्वि
भेतु ८।४ त्रिघ्नं द्वि २ हृत्या प्रमिषुश्रुतिभ्यः ४५ खतर्क ६० राशिप्रमिते द्वि २ निघ्नम्विषय ५ सेभ्यो ॥ ६० ॥ भवतीह
दृष्टिः श्रुतीन्दु ४।१ निघ्नं त्रिलवो द्विदिग्भे २।१० रवाब्धी ४० खके १० भ्यः स्मर सिंह शास्त्रादिति अत्र तृतीयैकादशाद्यु
क्तदृष्टिस्थाने ष्वेव दृष्टिगणितमुक्तं नान्यस्थानेषु तत्रापि राश्यपादावुक्तदृष्टेः प्रारंभः राश्यंते च क्षयः एवं स्थानदृष्टि

गणितागतदृक्षयोरैक्यात्तु ज्योतिर्विदो क्रमेव दृष्टिगणितं युक्तिसहितमालोचयामः अथ दृक्खेचरानयनमुक्तं ताजिका
लंकारे खेटाधिष्ठितभोदयावधि घियानक्राद्विलंकोदयान् संयोज्याप्तमितः फलं खशशि १० भिः सोंशा
द्विदृक् खेचरः युक्तोभैर्नवभिस्तथेष्टखचरं मेषात्खदे शोदयानेकीकृत्य पुनस्तथैव खचरः साध्योंशपूर्वो

| रेखा | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कला | ६० | ० | ४ | १५ | ४५ | ० | ६० | ० | ४५ | १५ | ० | ० |
| अंतराणि | ६० | ४० | २५ | ३० | ४५ | ६० | ६० | ४५ | ३० | ५ | १० | ६० |
| | ऋ | ध | ऋ | ध | ऋ | ध | ऋ | ध | ऋ | ध | ऋ | ध |

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ऋं शान्ते म | भुक्तांशाद्गुम ॥ | ३०अंशाद्गुणम | भोग्यांशान्वाअंता: | भुक्तांशाद्विगुण | भाग्यांशाद्विगुण | मध्याहृतांहुरेन भुक्तांशस्याइगुणा | राश्यादयस्तस्मिनुद् | स्वं हवन००० | स्वमथवन००० | भुक्तांशाद्विगुण | भोग्यांशाद्विगुण |

| १० | २ | ३ | ९ | ५ | ८ | ० | ६ | २ | | दिग्बलांशे ग्रहस्य |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | ३ | ३ | २ | २ | ४ | १ | राश्यभाग ग्रहकलाः |
| २ | २ | १ | १ | २ | २ | १ | १ | २ | ३: | भाजकाः |
| १५ | १५ | ३० | ३० | ४५ | ४५ | ६० | ६० | ४० | | पावाकलाः |

बुधैः पः स्याद्योगदलं तयोः स्वभनिस्त्राङ्गोथ दृष्टिग्रहः सुस्पष्टागमितालवाद्यदितदा दृष्टिः स्फुटा सोच्यते हे यं
हृज्जनितं शुभाशुभफलं पूर्णेन तो धीमता केषांचिन्मतमीदृशं दृष्टिमयाखेचारिणां भाषितं यादवः एवं नयो

रभागकाश्च दीप्तांशतुल्या यदि योगकार्यौ। योगोऽन्यमिथं यदि वा स्थानि थं ग्रहोऽत्र दत्ते किल वस्य मासमिति अथ
दृष्टिगणिते विशेषान्तरोक्ति श्लोकः दृश्यस्य द्रष्टारहितस्य भागा गजेन्दुत्र १८ अधिका स्वरामा ३० तु शोध्या पुन
स्तेरविते १२ विशोध्याः स्वदीप्तभागारथवा विशोध्यान चेद्दि युद्धा तितदान दृक् स्यात् यथोक्तदृक्तेन कलाविनि
घ्नाः दिवाकरै १२ दीप्तलवैः क्रमेण भक्ताः स्फुटा दृष्टिकला भवन्तीति अहह दृष्टिप्रयोजनमाह वामनः फलं दृष्टि
प्रमाणेन स्वयं यच्छन्ति खेचराः तत्फलं बलमानेन तात्वादेश्यं शुभाशुभमिति अथ दृष्टिप्रधानत्वान्मैत्रीचक्रस्य पू
र्वं दृष्टयोऽभिहितास्तत्रावसरप्राप्तं मैत्रीचक्रमुच्यते तत्र मैत्रीचक्रं चतुर्विधं एकं दृष्टिवशेन मित्रसम शत्रु रूपं द्वि
तीयं दृष्टिवशेनाधिमित्रसमशत्रु अधिशत्रुरूपं तृतीयं दृष्टिवशेन मित्रशत्रुरूपम् चतुर्थं दृष्टिं विनैव नियत मित्र
शत्रुरूपम् तत्र प्रथमं त्रिधा मैत्र्यादि सहितं मैत्रीचक्रमुक्तं रोमकताजिके मित्रं तृतीय पंचम नवमैकादश ३।५
।९।११ गतो पि योयस्य धन रिपु मृति रिष्फेषु च २।६।८।१२ समोऽग्रहस्यादिति तेयम् शत्रुस्तथैकतुर्य्येजा
यास्थानेऽथ दशमे १।४।७।१० ताजिकहिल्लाजमतेनेत्ताहक्कथितमस्माभिरिति द्वितीयं विशेषबलोपयुक्तम्य
न्वधा मैत्री चक्रमुक्तमुक्तावल्याम् यः प्रत्यक्षसमत्वदृष्टि ९।५ फलदोऽन्योऽधिमित्रोऽभियोगुप्तस्नेह दृशा ३।
११ अथ पश्यति च योऽयं मित्रमस्य स्फुटं नैवालोकयतीह २।६।८ यस्तु समो योगुप्तदोजेऽन्य हक्कु ४।१० हृष्या शत्रु

रिष्याधिशत्रुरपियः प्रत्यसदौर्जन्यहृत्कृ ७।१ इतितृतीयम्मित्रशत्रुरूपमैत्रीचक्रमुक्तन्त्रैवइत्थानिषुसकेोत्वेदो
नेसकौचशुभाशुभम् यद्दामित्ररिपूज्ञेयौस्वदृष्ट्यानानुमाननइति चतुर्थंनियतमित्रशत्रुरूपन्द्विविधम्मैत्रीच
क्रमुक्तन्ताजिकसारे मित्रारायारशशाङ्कः शक्रसचिवाभौमार्कदेवाचिंता जीवार्कस्मृत्याधिपाश्शनिसितौचन्द्रा
र्कभूनन्दनाः सौम्यादित्यभवौशशाङ्कजासितौमन्दज्ञशुक्राइमे सूर्यास्सूरिपवसुताजिकमतेज्ञेयाबुधैश्शोहि
ताइति एषांसर्वेषाञ्चक्राणांयथासम्प्रदायमव्यवस्थाद्रष्टव्येति मैत्रीचक्रप्रयोजनम्वक्ष्यमाणपञ्चवर्गीविले
ज्ञेयम् नदृग्ग्रेसर्वम्स्फुटीभविष्यति अथपञ्चवर्गीवलन्तत्प्रयोजनंचाहपाद्मवसूरिः वलम्विंशोपकज्ञानम्पञ्च

| मित्रामित्रंसूर्यादीनाम | | | | | | | |
|---|---|---|---|---|---|---|---|
| ग्रह | सू | चं | मं | बु | वृ | शु | श |
| मि० | चं मं वृ | सू मं वृ | सू चं वृ | श· शु | चं सू मं | बु· श | बु० शु |
| शत्रु | शु श | बु शु श | बु शु श | सू चं मं वृ | बु शु श | सू चं मं | सू च मं वृ |

वर्गीवलम्विना नभवेद्यथवस्यामिपञ्चवर्गीप्रसाधनमिति ताजिकालंकारेपि
वीर्यज्ञानेवर्षनाथप्रसिद्धःकुर्तुंशक्यानेवयस्मात् समासुत्ताताग्रवीर्यंसूर्यान्तःखेच
राणान्तस्मादृक्ष्येपञ्चवर्गीविधानमिति पञ्चवर्गानाहसमरसिंहः स्वगृहंस्वोच्च
हद्दत्रैराशिकमथमुसल्लहंचेति पञ्चग्रहाधिकाराविनाधिकारंग्रहोनवलीति
तदर्थंग्रहेशानाहवामनः भौमश्शुक्रज्ञचंद्रार्कवुधश्शुक्राऽरमंत्रिणः शौरिःशनिस्त्र
याजीवोमेषादीनामधीश्वराइति अथग्रहाणामुच्चनीचराशीन् तत्परमोच्चानाहयादवः

षोन्त्यषोथमकरे मृगाद्द्कर्कुलीरो मीनस्तु लादिनपपूर्वी खगोच्चकानि ॥ अंशा १० दिन ३ पिंड २८ तिथि १५ वायु ५ भ २७

विंश २० तुल्यास्तुंगालवाः स्वनगगास्तु भवंतिनीचाद्दितिराशिषु हद्देशाः संज्ञानंत्रे मेषे गतर्कोष्टश

रेषुभागा जीवास्फुजिद्ज्ञारशनैश्चराणां वृषे षट्स्वोगशरानलांशाः शुक्रज्ञजीवार्किकुजेशहद्दाः युग्मे षड्गेषुनगांगभागाः सौम्यास्फुजिज्जीवकुजार्किहद्दाः कर्केद्रिनंदौगनगाब्धिभागाः कुजास्फुजिद्ज्यशनैश्चराणां सिंहे गभूताद्रिरसांगभागाः ष्टैवेज्यशुक्रार्किबुधारहद्दाः स्त्रियां नगाशाब्धिनगास्वभागाः सौम्योशनो जीवकुजार्किनाथाः तुले रसाष्टाद्रिनगाद्रिभागाः कोणज्ञजीवास्फुजिदारहद्दाः कीटनगाब्ध्यष्टशरांगभागा भौमास्फुजिद्ज्ञेज्यशनैश्चराणाम् चापेरवीषुस्तुधिपञ्चवेदाजीवास्फुजिद्ज्ञारशनैश्चराणाम् मृगेनगाद्र्यष्टयुगस्तु नीनां सौम्येज्यशुक्रार्किकुजेशहद्दा कुम्भेनगांगाद्रिशरेषुभागाः ज्ञशुक्रजीवारशनैश्चराणाम् मीने कवेदानलनंदपक्षाः सितेज्यसौम्यारशनैश्चराणाम् अथ त्रैराशिकेशा उक्तास्ताजिकालंकारे मेषे भौमार्कशुक्रा बुधविधुशनयः स्युर्वृषे युग्मराशौ देवेज्यस्माजसूर्याः सितबुधशशिनः कर्कटे संप्रदिष्टाः सिंहे मंदेज्यभौमा रविसितशशिजाः स्युर्युवत्यां तुलायां चन्द्रार्कीज्यास्तथालौ कुजरविकवयो ज्ञेन्दुमन्दाश्च चापे मकरे गुरुभौमपश्चिनीशास्सितविच्चन्द्रमसो घटे निरुक्ताः शनिवाक्पतिभूमिजास्तु मीने कथिता स्तत्क्रमणैकेइकाणनाथाः इति त्रैराशिकेश्वराः लाघवेनोक्ताः संज्ञातन्त्रे आद्याः कुजाद्या रवि

| सू | च | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| ० | १ | ९ | ५ | ३ | ११ | ६ |
| १० | ३ | २४ | १५ | ५ | २७ | २० |
| ६ | ७ | ३ | ११ | ९ | ५ | ० |
| १० | ३ | २४ | १५ | ५ | २७ | २० |

तोपिमध्यमास्सितास्तृतीयाः क्रियतो द्रेक्काणपाइति अतिलाघवेनत्रैराशि
केश्वराउक्ताहरिभट्टदैवज्ञैः द्विशून्यपञ्चयुग्माशिसम्प्रतस्ते द्रेक्काणपाः ॥
अत्रवर्तमानोराशिस्तेयः वर्तमानराशिः प्रथमद्रेक्काणोद्वियुतोद्वितीयद्रे
क्काणोशून्ययुतस्तृतीयद्रेक्काणपञ्चपुककतेव्यस्सप्रतस्ते सूर्यात् द्रे
क्काणस्वामीभवतीत्यर्थः मुशल्लहाउक्तास्ताजिकरत्नमालायाम् मुशल्ल
हास्तु: क्रियनक्रजूककर्कुलीरपूर्वाक्रियपूर्वकाणामिति एतत्स्पष्ट ।
माहयाहवस्तरिः अजधनुर्हरयोजमुखान्मृतास्त्वलिकुलीर मेषा
श्वकुलीरतः घटमुखाघटयुग्मघटामता मृगवृषैणहशोमकर्षपइति ता
जिकभूषणताजिकालंकारादौमुशल्लहेशास्त्वन्यथैवोक्ताः रवीज्यमं
दास्सितचन्द्रभौमाः शनिज्ञजीवाः कविभौमचन्द्राः मुशल्लहेशास्त्वजतो
मृगेन्द्राद्धनुर्द्धराद्द्विनिशिद्वयोर्वेति नैतद्रम्यम् यतस्समरसिंहेनै
नेवषैशनिरोयाद्यैस्त्रैराशिकेश्वराउक्तानतुमुसल्लहेशाः मेषादिचतु

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
| वृ६ | शु८ | बु७ | मं७ | वृ६ | बु७ | श६ | म७ | वृ१२ | बु७ | बु७ | श१२ |
| शु६ | बु६ | शु६ | शु६ | शु६ | शु११ | बु८ | शु४ | शु५ | वृ७ | अ६ | वृ४ |
| बु७ | वृ८ | वृ५ | बु६ | श७ | बु४ | वृ७ | बु८ | बु४ | शु८ | वृ७ | बु३ |
| म५ | श५ | म७ | वृ७ | बु६ | म७ | बु७ | वृ५ | म५ | श४ | म५ | म९ |
| श५ | म३ | श६ | श४ | म६ | श२ | म२ | श६ | श४ | म४ | श५ | श२ |

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | रा |
| मे | बु | वृ | शु | श | सू | चं | मे | बु | वृ | शु | श | आ१ |
| सू | चं | मं | बु | वृ | शु | श | सू | चं | मं | बु | वृ | आ२ |
| शु | श | सू | चं | मं | बु | वृ | शु | श | सू | चं | मं | आ३ |

स्वैराशिके स्वरा र विसिता र्किर्भृगवो हि गुरुशशिबुधभौमा निशि शनिकजगुर्विन्दवः सततमिति एते दिनरात्रिवि-
भागोक्ताः स्वैराशिके स्वरावर्षेशार्थमेवेत्युक्तं संज्ञातंत्रे वर्षेशार्थं दिननिशोर्विभागोक्ताः स्विराशिपा इति तस्मादत्र
पूर्वोक्ता नवांशेशा एव मुसल्लहेशाः उक्तं च सुधानिधौ मुसल्लहं नवांशस्त्वं कथितं ताजिके मतेः इति ताजिकति-
लकेपि मुशल्लहेशास्त्व नवांशनाथाः प्रोक्ताः स्तदा खिन्दकरोमकाद्यैरिति ताजिकमुक्तावल्यामपि मुशल्लहेशा-
स्त्ववमांशपा न पेजगुर्नतेरिवं हकशास्त्रविज्ञा इति अथ पञ्चवर्गीफलमुक्तं यादवेन स्वकीयगेहादिभवाशुभा
स्यात्यापारिजाता विपरीतभावा. मित्राहिजा मध्यफलेषु वर्गी ५ विशेषवीर्यानयनं ब्रुवे हम् अथ पूर्वं ग्रह
लत्ता नार्थे स्थानान्युक्तानि इदानीं कस्मिन्स्थाने कियद्बलमित्युक्तं ग्रहत्ताभरणे त्रिंशत् ३० स्वभे विंशतिरुच्चगे
स्यात्तिथिः १५ स्वहद्दे दशकं द्रेक्काणे १० नवांशके पञ्च ५ भवन्त्यशीतिरेवं युगा प्राप्य विशोपकाः सुरिति अथ मि-
मित्रसमशत्रुरूपे मैत्रीचक्रे वलविभाग उक्तः संज्ञातंत्रे स्वस्वाधिकारोक्तवलं सुहृद्भपादोनमर्द्धं समभेरिभेंघ्रिः स्व-
वं समानीय वलं तदैक्ये वेदोद्धृते हीनवलः शरोनः इति उच्चवलानयनमुक्तं वामनेन नीचोनितो ग्रहः षड्भाधिकोभ-
गडल १२ शोधितः शेषस्यांशानं द ९ भक्ता वलमुच्चस्य जायत इति अथात्र मामकं पद्यम् नीचग्रहान्तरं कार्यं षड्भा-
दल्पं यथा भ‾वेत् तदंशाः क ९ लवः स्वोच्चवलं स्यात्ताजिके स्फुटमिति नीचे ग्रहः शोध्यो नीचं वा ग्रहशोध्यं शोधिते

सति यथा षड्भाद्दलं भवति तथा कार्यं तस्यांशानवभक्ता उच्चबलं स्यादिति ॥ अथाधिमित्रमित्रसमशत्र्वधिशत्रुरूपे मैत्रीचक्रे बलविभागउक्तस्ताजिकनिलके उक्ताः कलाः स्वसंगते ग्रहे द्रेप्रत्येकवर्गेत्वधिमित्रगेहे स्वांघ्रेशहीनाहितगेह संस्थे स्वार्द्धोनिताः स्वांघ्रिलवत्रयोनाः समर्क्षगे शत्रुगृहोपयाते निजाष्टमांशप्रमितं बलं स्यात् अधिद्विषद्भोपगते स्वकीये नृपांशलिप्ताइति वर्गवीर्ये यथागतं तुंगबलं तु तेन समन्वितं वर्गबलं बलं स्यादिति मित्रशत्रुरूपे मैत्रीचक्रे बलमुक्तपद्धती ॥ निजमित्रारिभे त्रिंशन्ति ३० अथ १५ सार्द्धद्वयो ७।३० बलम् हद्देतनद्दलं त्र्यंशे द्रेष्काणेशे रसांशकइति त्र्यंशे नवांशे एतत्स्पष्टमुक्तं ताजिकसारे त्रिंशांशा निजभे स्वमित्रभवने पञ्चांशकाः १५ शत्रुभे सार्द्धाः सप्तलवाः ७।३० स्वर्क्षाप्तिलवके भागास्तु पञ्चेन्दवः १५ त्रिंशांशे निजमित्रभे नगलवाः सार्द्धाः ७।३० ऊनाः शत्रुभे पादोनाः ३।४५ स्वगुणांशके दललवाः १० बाणांशकाः मित्रभे द्रेष्काणेस्वदलायमा २।३० स्वरिगते नवांशके स्वेशराः ५ नवांशेनिजमित्रगे यमलवाः सार्द्धो २।३० स्वरौ तद्दलं १।१५ मिति तदेकपादोनयमभागप्रमाणिका बलोन्मितिः दशाधिके बलो बली शराल्पके त्वबीर्यकइति अत्र वामनेन लग्नस्यापि पंचवर्गी कार्येत्युक्तम् स्वो च्चं नवांशकं हद्दा गृहं द्रेष्काणं एव च सलग्नरवेन्दुराशीनां तु प्रोक्तोयं पंचवर्गिके

| ०० | स्व | मि | स | श |
|---|---|---|---|---|
| गृ० | ३०।० | २२।३० | १५।। | ७।३० |
| ह द्दा | १५।० | ११।१५ | ७।३ | ३।४५ |
| द्रे: | १०।० | ७।३० | ५।० | २।३० |
| नं० | ५।० | ३।४५ | २।३० | १।१५ |

ति अथ वर्षेशदशाधीशबलादिनिर्णयार्थं विंशोपकादिभागेनेनष्टबलादिलक्षणमुक्तन्ताजिकसारे वाणास्यै नष्टबलो ग्रहोदश १० मितैर्मध्यो विंशोपैस्ततः श्रेष्ठोघस्त्र १५ मितैस्सुखार्थजनकः प्रोक्तः स्वदस्त्रै २० र्भवेदिति ननु विंशति विंशोपकात्मकम्बलङ्कस्यापि ग्रहस्य नायाति तथाहि मेषस्थसूर्यस्य उच्चबलादि यद्यपि समायाति तथापि स्वदत्वा न्मित्रसमशत्रुगृहाद्भेदेन बलतारतम्येनावश्यन्यूनतासाद्दृश्य विंशोपकमिता भवन्त्येव एवं सति साद्दृश्यतन्न दश विंशोपकाबलं सिंहस्थ सूर्यस्य स्वगृहबलं यद्यपि समायाति तथाप्युच्चराशेरभावादुच्चबलस्य न्यूनतायां षोडश विंशोपकाबलं स्यान्न तु विंशति विंशोपकात्मकम् अथ बुधस्य कन्यायां पञ्चदशांशे स्वगृहबलं। स्वोच्चबलञ्च पूर्णं यद्यपि समायाति तथापि होराद्रेष्काणनवांशबलानि पूर्णानि न सम्भवन्ति यतः आदिमाः षडंशाकन्यायाम्बुधहोरास्तन्तिमस्त्रिभागो बुधद्रेष्काणः अंतिममंशत्रयं विंशतिकलाधिकम्बुधनवांशः परिकन्यान्तिमनवांशो गृह्यते न तदा स्वगृहद्रेष्काणस्वनवांशबलानि सम्पूर्णान्यायान्ति परन्त्वेकं सन्धिवस्तनोः परं प्रच्यवनं रूतिन्यायादुच्चबले किञ्चिदूनं होरादिबलमपि मित्रादिगृहसत्वान्न्यूनमतः परं बलं यथाकथञ्चित् षोडश विंशोपकात्मकं स्यान्न विंशति विंशोपकात्मकम्बलम्

पंचधा मैत्री वशबल चक्रम्

| स्व | अधिमि | मि | स | श | ० |
|---|---|---|---|---|---|
| ३० ० | २२ ३१ | १५ ० | ७ ३० | ० १५ | गृ |
| १५ ० | १२ १५ | ७ ३० | ३ ४५ | ० ५६ | हो॰ |
| १० ० | ७ ३ | ५ ० | २ ३० | ० ३७ | द्रे॰ |
| ५ ० | ३ ४५ | २ ३० | १ १५ | ० १८ | न॰ |

मित्र शत्रु रूप मैत्री

| १८ | द्रे | हो | न॰ | ० |
|---|---|---|---|---|
| ३० | १५ | १० | ५ | [illegible] |
| १५ | ७ ३० | ५ ० | २ ३० | [illegible] |
| ७ ३० | ३ ४० | २ ३० | १ १५ | [illegible] |

मन्येषान्तु ग्रहोच्चयोर्भेदाद्विंशति विंशोपकन्यूनमेव वलं स्यात् अत्र केचित्पंचवर्गी द्वादशवर्गी हर्षस्थानवलानामैक्यं त्रिभ
क्तं यदि विंशति विंशोपकमितं स्यात्तदा पूर्णवलो ग्रहो ज्ञेयः उक्तं च यादवेन श्री सूर्यवर्गी शरवर्गिकासु स्थानोत्थवीर्यैक्य
मथाग्निभक्तं चेद्विंशतिः पूर्णवलो ग्रहः स्याद्बलानुमानेन च मध्यमादिरित्यलमतिप्रसंगेन अथ दशाफलज्ञानार्थं पं
चविंशोपकन्यूनवलो नष्टवलः पंचविंशोपकात्मकवलः स्वल्पवलः पंचाधिकवलो मध्यवलः दशाधिकवलः
पूर्णवलः वर्षेशफलज्ञानार्थं तु षड्विंशोपकात्मकवलो हीनवलः षड्विंशोपकाधिकवलो मध्यवलः द्वादशविंशोप
कात्मकवलः पूर्णवलः एतत्स्पष्टमुक्तं हिल्लाजेन पंचविंशोपकान्न्यूनवलो नष्टवलो ग्रहः पंचविंशोपकवलो
हीनवीर्यः प्रकीर्तितः पंचाधिकवलो मध्यवलः संपूर्णवीर्यकः दशाधिकवलोऽब्देशफलं ज्ञेयं त्रिभागतः इति सामा
न्यपंचवर्गीवलसाधनं अथ स्वतंत्रताविदः काद्दिसमनेः स्थानदिक्कालनिसर्गचेष्टाहग्वलं निरूप्यते उक्तं च समर
सिंहेन सामान्यवलमिहोक्तं विशेषमवलोक्य फलमूह्यमिति तत्रादौ स्थानवले सविशेषपंचवर्गीचक्रसंचनमु
क्तं कुत्थयोगे समरसिंहेन सवली स्वगृहत्रैराशिकहद्दोच्चमुशल्लहेष्वरिष्ट इति एतत्स्पष्टं गणितपूर्वकमुक्तं ताजि
कभूषणे वल्यास्वाधीशाद्दीनर्क्के वेदाग्निनेत्ररूपाद्दानिस्वगृहेको १२ हृतानि तु गेवेदाग्न्यब्धिनस्तत्तद्दृहद्देराभाद्दोत
द्दांन्यतः स्युः त्रैराश्युत्ये हीनहार्ईकानि त्रैराश्यर्ईस्यान्मुशल्लाहसंज्ञे यद्वा स्वेष्टारानिषु द्वादशांशोगेहार्दगाव्ध्यम

हा. र. २१

योऽष्मा नि रस्ताः रामाश्च ज्ञानेन चन्द्रार्द्धं कानि चन्द्राद्वौ शारूपपूर्वाः क्रमेण खेटे स्युर्दैसप्तमात् स्वादिगेहाच्छेषे भार्द्धे न्व

त्रकल्प्योऽनुपातः अभीष्टादिग्रहादिभ्यो बलं यदिह साधितम् तन्न दृष्ट्यानमिष्ठं न्नं षष्टिभक्तं स्फुटं भवेदिति अ

त्रनर्कवेदाद्यकानि द्वादशांशोद्ग्रनानि रूपकलादिकं बलं भवति अथात्र स्वगृहे पूर्णं बलं तु रफैकं स्वगृहं न गभाग

| पंचधा मैत्र्यां बलविभागः स्वनाम्नांकानि द्वादशांशोदृनानि बलम् | | | | | |
|---|---|---|---|---|---|
| स्वीयवर्गे | ६ | ४ | ३ | २ | १ |
| अधिमित्रवर्गे | ४ | ३ | २ | १ | ॥ |
| मित्रवर्गे | ३ | २ | १ | ॥ | । |
| समस्यवर्गे | २ | १ | ॥ | । | = |
| शत्रुवर्गे | | | | | |
| अधिशत्रुवर्गे | ॥ | । | = | - | ऽ॥ |
| ००००० | गृह | उच्च | हद्दा | त्रैरा | मुस |

इत्युक्तेः स्वगृहात्सप्तमे राशौ ग्रहो निर्बलः अन्तरे त्रैराशिकमुच्चबलवज्ज्ञेयं तत्रार्क

चन्द्रयोरेकमेव स्वगृहमतो न सन्देहः भौमादीनां तु स्वगृहद्वयसद्भावात् तत्सप्तमस्यापि

द्वैविध्यात् कथमत्र बलानयनोपायः उच्यते भौमादिषु चारवशान्निकटस्थितमेव स्व

गृहं न तु दूरस्थितमिति सम्प्रदाययुक्तिरिति अथ ग्रहं स्वगृहसप्तमाद्विशोध्य शेषं षड्धि

कञ्चेद्द्वादशशुद्धं नो चेद्यथास्थितमेव यथाप्यन्ततस्तत्सांशाः षड्भाष्कलादि बलं

स्यादिति अत्रोपपत्तिः स्वगृहप्रारम्भे पूर्णं त्रिंशत्कलात्मकं बलं तत्सप्तमारम्भे शू

न्यमन्तरेऽनुपातः यदि राशिषट्कांशैः १८० पूर्णं बलं ३० लभ्यते तदेष्टेन किमिति ॥

अत्र गुणहरयोस्त्रिंशतापवर्तने कृते गुणस्थाने रूपं भाजकस्थाने षट् इत्युपपन्नमेव रान.

मधिमित्रग्रहस्य गृहे पूर्णं बलम् २० अधिमित्रगृहात्सप्तमे शून्यं तत्राधिमित्रग्रहस्य गृहं अधिमित्रसप्तमगृहाद्विशो २१

ध्यशेषेषडधिकन्द्राद्दशांशुद्धत्वो चेद्यथास्थितमेवस्थाप्यंतस्यांशानवभक्ताः कलादिस्वाधिमित्रगृहवलं स्यात् अत्रो
पपत्तिरनुपातेन यदि राशिषट्कांशैः १८० पूर्णं २० वलंतदेष्टेनकिमिति अत्रगुणहरयोर्विंशतिभिरपवर्तनेन हु
नेगुणस्थानेरूपभाजकेनवरत्युपपन्नमेवं गृहवलेनस्वस्वपरमवलेनस्वस्वसप्तमगृहेन पूर्ववदनुपातयुक्त्या
सोपपत्तिकं वलंस्यात् स्वोच्चवलंत्वनुपातेनप्रागानीतमेव अधिमित्राद्युच्चे उक्तवदनुपातेनवलसाध्यउच्चरा
श्यभावेस्वोच्चवलमेवकर्तव्यं अथहद्दाद्रेष्काणनवांशानांसप्तमेनैर्वल्यं तिवचनाभावादंशैरेवानुपानस्तद्यथाग्र
हस्यवर्तमानहद्दारंभेवलारंभः हद्दामध्येपरमंवलं १५ हद्दासमाप्तौवलंशून्यंतत्रग्रहहद्दाभुक्तभोग्ययोरल्पहद्दां
शाः पंचदशगुणावर्तमानहद्दांशभक्ताः स्वहद्दावलंस्यात् अत्रोपपत्तिरनुपातेन यदिवर्तमानहद्दांशैः पंच
दशकलालभ्यं तेनदाग्रहहद्दाभुक्तभोग्ययोरल्यांशैः किमिति उपपन्नं अथस्वद्रेष्काणप्रारंभेफलोपचयः पंचमां
शसमाप्तौपूर्णंवलं २० दशांशसमाप्तौशून्यंवलंतत्रग्रहविद्यमानद्रेष्काणभुक्तभोग्ययोरल्पमंशादि द्विगुणंकला
दिस्वद्रेष्काणवलंस्यात् अत्रोपपत्तिः यदिपंचभिरंशैर्दशकलामितंवलंतदेष्टेन किमत्रपंचभिरपवर्तनेक्तेनेहरस्थानेरूपंगु
णस्थानेद्वयमित्युपपन्नं अथमुशल्लहारंभेवलारंभः मध्येपूर्णंवलं ५ अंतेशून्यंतत्रग्रहविद्यमानमुशल्लहेभु
क्तभोग्ययोरल्पमंशादित्रिगुणितंस्वमुशल्लहवलंस्यात् अत्रोपपत्तिः यदिमुशल्लहार्द्धेनचत्वारिंशत्कला ।

धिकेनैकांशमितेनपंचकलामितंवलंतदेष्टेनकिमितित्र्प्रत्रभाजकात्त्रिगुणोगुणकः अतोंशादित्रिगुणीकृत्यमिस्तु
पपन्नमेवमनुपातेनाधिमित्रादिद्रेष्काणवलंपूर्वोक्तपरमवलेनग्रहस्यहद्दाद्रेष्काणमुशल्लहवलंसाध्य
मेवंस्वादिनवांशेस्वादिहद्दायान्ततदंशैरनुपातात्फलंत्र्ज्ञेयम् तत्रहद्दायास्यपरमवलङ्कलाः १५ मुशल्ल
हेपरमङ्कलाः ५ अथएवंसर्ववलैक्यङ्ग्रहोपरिअन्येषाङ्ग्रहाणांयाद्दष्टयस्तमागतास्तदैक्येनयुतोनंष
ष्टिमक्तंस्फुटंस्यादेवंसविशेषपञ्चवर्गीचक्रनिरूपणानन्तरमन्यत्स्थानवलमुक्तन्तत्रैवसमरसिंहेन योलग्ने
केन्द्रेवानन्तिकटेवाप्यथवास्थितेलग्नंपुरुषाग्रगानाद्यावतृतीयभवनेस्त्रियोपिनवमानम् पुंखेटाःपुराशौस्त्रीराशौ
स्त्रीग्रहावलिनः स्थिरराशौवाभवान्तिनैवलिनइति एतत्स्पष्टङ्गणितपूर्वकमुक्तमुक्तावल्याम् लग्नकेन्द्रनद्युप।
स्थितग्रहेरूप१कार्द्दे१/२ ५ चरणोन्मितं१/४ वलंस्त्रीपुरुषमवनेध्नैवमानःपुंसुभावफलतोपरोगेषुस्थिरराशौसर्वे
षांस्युस्त्रीराशौपुमङ्गनाख्यानामितिअत्रलग्नेग्रहःपूर्णवीर्य्यःकेन्द्रेऽर्द्धवीर्य्यःपणफरापोक्लिमयोश्चरणवी
र्य्यस्तत्रपूर्णम्वलंषष्टिकलात्मकम् अर्द्धन्त्रिंशत्कलाचरणःपञ्चदशकलाः अथलग्नसमेग्रहेपूर्णम्वल
न्द्वादशसन्धिविरामविकलातोलग्नभावप्रारम्भस्ततस्तद्विरामंयावत्फलोपचयःप्रथमभावविरामविकलातः
प्रथमसन्धिविरामंयावद्भावफलापचयःअन्तरस्थेग्रहेनुपातःसचानुपातःपूर्वङ्ग्रहसन्ध्यन्तरंकार्यमित्यादि

नाभावफलानयनार्थं कृतमेवमतो लग्नस्थग्रहस्य भावफलमेव बलं केंद्रस्थग्रहस्य भावफलार्द्धमेव बलमापरा
पोक्लिमस्थग्रहस्य भावफलचतुर्थांशो बलमिति अथ स्त्रीग्रहाणां चतुर्थादिषड्भावेषु बलवत्त्वोक्तेः पूर्वयु
क्त्या चतुर्थादिषड्भावस्थानां स्त्रीग्रहाणां भावफलमेव तत्रात्यं बलम् एवम् पुरुषग्रहाणामपि दशमादिषड्भावेषु
स्थितानां भावफलमेव बलमिति अथ स्थिरराशिस्थग्रहबलं तत्र राश्यारंभे बलोपचयः पंचदशांशैः पूर्णं
बलं राश्यंते शून्यं बलमतो ग्रहस्य राशिपूर्वार्द्धे स्थितस्य भुक्तांशा राश्युत्तरार्द्धे स्थितस्य ग्रहस्य भोग्यांशाश्चतुर्गुण
बलं अत्रोपपत्तिः यदि पंचदशांशैः पूर्णं बलं ६० लभ्यते तदा स्थिरराशिस्थितभुक्तभोग्यैरंशैः किमत्रोभयोः
पंचदशभिरपवर्तं कृते त्र्यंशाश्चतुर्गुणाः कार्या इत्युपपन्नम् एवं विषमसमराशिगानां पुंस्त्रीग्रहाणां राशिसं
स्थग्रहबलं वहल्लतेयम् इति स्थानबलं अथ दिग्बलमुक्तं तत्रैव नवमसहजषष्ठागायपुत्रान्त्यभस्थाद्युमणि
नरहृत्खेटादिग्बलाद्या भवेयुरिति अत्र सूर्यादीनां नवमादिस्थाने पूर्वोक्तयुक्त्या भावफलतुल्यमेव बलं ज्ञेयं ॥
अयमेव प्रथमहर्षबलं समरसिंहेनोक्तं इति दिग्बलम् अथ कालबलम् तत्र समरसिंहः गुरुमंदौ यदि पश्चि
मरात्रौ शुक्रेंदुभूसुताः सायम् उदयंति तदा बलिनो नरग्रहाश्चाह्नि नक्तमपरे च अत्रार्कोऽस्तमलग्नादयः।
कालः सायंशब्दवाच्यस्तत्र चंद्रभौमौ पूर्णं ६० बलौ अत्रार्कोऽस्तु नः सप्तमः कदापि न संभवत्यतोऽत्र सप्तम

शब्दः परमांतरवाची ज्ञेयः अतः सूर्यशुक्रयोः परमांतरांशैः पंचाशत्संख्यैर्बलं साध्यं उक्तं च मुक्तावल्यां रवेः सप्तमे
चंद्रभौमौ बलाढ्यौ रवपंचाश ५० तुल्यांतरे दैत्यमंत्रीति सूर्यतुल्यत्वे सर्वेपि निर्बलाः अथ बलानयनं सूर्यस्य चंद्रभौ
मयोश्चांतरषड्भेनस्थाप्यांतरदशात्रिभक्ता बलं भवेत् अत्रोपपत्तिरुक्तबलवत् सूर्यशुक्रयोश्चांतरं पंचाशदंशमध्येस्था
प्य तदनंतरमेव तद्दशाः षड्गुणाः पंचभक्ताः शुक्रबलं स्यात् अत्रोपपत्तिः यदि पंचाशदंशैः षष्टिकला लभ्यंतेन
दैष्टेन किमित्यनयोर्दशभिरपवर्तनेन गुणकः षड्भाजकः पंचेत्युपपन्नं अथ जीवशन्योरर्द्धरात्रानंतरं बलारंभस्तृती
यप्रहरान्ते बलं पूर्णं चतुर्थप्रहरान्ते बलं शून्यं अथ सूर्योदयात् त्रिमानमानीयपश्चादर्द्धरात्रानंतरमिष्टकालस्तदान
स्मिन्नर्द्धरात्रः शोध्यः यदि तृतीयप्रहरोनरमिष्टकालस्तदा त्रिमानमध्ये शोध्यः शेषं षष्टिगुणं प्रहरमानेन भक्तं लब्धं गु
रुशनिबलम् अथ दिवसादिग्रहबलम् तत्र लग्नमध्ये रविस्त्रिशोध्य यद्यवशेषं न्यूनं तदा तद्राश्यादिकं विंशद्गुण
म्बलम् अधिकं षट्च्युतं विधेयं शेषं राश्यादि विंशद्गुणं पुंग्रहाणां बलं भवति पुंग्रहाणां रव्यूनलग्ने षडधि
केतु नवबलमेवं रव्यूने लग्ने षड्भे सति स्त्रीग्रहे पुनर्बलम् षडधिके षड्भेन न वाधिकं द्वादशन्यस्तं अवशेषं विंशति
गुणं स्त्रीग्रहवीर्यं भवति यतो दिननिशोः पुंस्त्री प्राबल्यमुक्तं सन्ध्यौ तु विरामः एतत्स्पष्टमुक्तं मुक्तावल्याम् अर्को

नलग्ने च यते त्रिराशिं यावत्परत्रापचयेन रूपम् पुंस्त्वन्यरवेर्दैर्घ्यं च य नवा न षड्भात्परत्रापचयेन वेद्यं अयमर्थः

अकौनलग्नेत्रिराशिंयावच्चयतोहहितोरूपस्वलम् त्रिराशितोग्रे अपचयेनरूपंपुंखेटेषुवलम् अन्यखेटेषुस्त्री
ग्रहेषुसप्तमान्नवान्तंयावद्रूपस्वलम् अपरत्रदशमात्द्वादशान्तंअपचयेनरूपंवलंज्ञेयमित्यर्थः इतिकालव
लम् अथनिसर्गवलम् तत्रनिसर्गवलमुक्तंताजिकप्रदीपे रूपस्यसप्तमांशो ८।३४ वलमभवेत्स्यपुत्रस्यत
तद्व्यादिगुणंभौमज्ञगुरुसितेन्दुर्कजं निसर्गंस्यात् इतिनिसर्गवलम् अथचेष्टावलम् समरसिंहः मन्दगतिर
शीघ्रगतिश्चावक्रः क्रूरद्दग्रहितः क्रूरायुक्तोवलवान्सुभयुतदृष्टः कृताभ्युदयः सूर्यस्यचैकभागेऽस्ति ए
तस्यषष्ठमुक्तंताजिकमुक्तावल्याम् द्विगुणाशारूपोनवीर्यमथाकोंशगानाञ्चाशुभसमलिप्तस्यवलंक्रूरसहि
तस्यरूपंस्यात् मार्गोदयाद्दभागस्थितस्यवाऽशीघ्रगस्यमध्यगतेरिति अत्रसूर्यीपञ्चाशिनवांशेनास्मिन्नेवन
वांशेस्थितस्यग्रहस्यभागाद्यं द्विगुणंषष्टिभक्तमवशेषंवलंभवति अथशुभग्रहेणसमानलिप्तस्यषष्ठिकला
वलंन्यूनाधिकत्वेतुद्वयोरन्तरं त्रिंशद्दशान्यूनंविधेयंतद्दशा द्विगुणंवलम् अत्रशुभसमलिप्तोयदाक्रूरग्रहस
हितोभवतितदानवलमित्यपिज्ञेयं अथग्रहस्यमार्गदिनमारभ्यवक्रपर्यन्तंतथोदयदिवसमारभ्यास्तपर्यन्तयादि
नसंख्यातदर्द्धं विध्यापनावत्संख्याद्विषष्टिकलात्मकंवलंवक्रदिनेअस्तदिनेचवलंशून्यम् अन्तरेऽनुपातःया
दिमध्यदिनेः पूर्णंशुभवलंलभ्यतेतदामार्गदिनाद्गतेर्गम्येर्वादिवसैस्तथाग्रहोदयदिनाद्गतेर्गम्यैर्वादिवसैः कि

हो० र० २५

| श्री: | मं | वृ | श |
| --- | --- | --- | --- |
| अस्तादुदय | ४ | ७ | १। ९ ।३० |
| उदयाद्वक्रे | १० | ४।१५ ।३० | ३ |
| वक्रान्मार्गम् | २ | ४ | ४ |
| मार्गादस्तं | १० | ४।३ ३० | १३ |

| १० | पूर्वास्तात्पश्चिमोदयः | पश्चिमोदयाद्वक्रम् | वक्रात्पश्चिमास्तम् | पश्चिमास्तात्प्रागुदयः | प्रागुदयान्मार्गः | मार्गात्पूर्वास्तम् |
| --- | --- | --- | --- | --- | --- | --- |
| बु· | दि ३२ | दि ३२ | दि· ४ | दि १६ | दि ४ | दि ३२ |
| शु | दि ७५ | दि· २४० | दि० २३ | दि· ९ | दि २३ | दि० २४० |

मितिस्त्रयोदयास्तवक्रमार्गदिनानां ज्ञानं सुगमोपायेन मद्गुरू
चरणोऽस्मि सिद्धान्तचिन्तामणावुक्तम् पूर्वास्ततः पश्चिमउद्गमोऽस्मा
द्वक्रं ततोऽस्तः पर उद्गमः प्राक् मार्गी गुरोस्तौ खलु दन्त ३२ दन्तै
३२ वेदै ४ नृपै १६ वेदै ४ रदै ३२ बुधः स्यात् भृगोस्ताहद्विमा
सपुष्टमासैस्त्रिदिनैः क्रमात् नवभिस्त्रिदिवसैर्मासैर
ष्टमितैस्तथा भौमास्तादुदयस्तस्माद्वक्रं तदनु मार्गता ततो
स्तमेवं क्रमतो वेद ४ काष्ठा हि २ पंक्ति १० भिः मासैर्भुवो सांघ्रिवेदैर्युगैस्तांघ्रियुगैर्गुरोः शनेस्त्रांघ्रिभुवारामैर्वेदै
स्साहैश्च वह्निभिः इत्युदयास्तादिदिनज्ञानम् अथ ग्रहगतिबलम् तत्र शीघ्रगस्य कोऽर्थः मन्दगतेर्म
ध्यमगतिन्यूनस्य स्पष्टगतेर्ग्रहस्य सबलत्वं तथा मध्यमगतेर्मध्यमगतितुल्यस्पष्टगतेर्ग्रहस्य च सबलत्वं मध्यमगति
तोऽधिकस्पष्टगतेर्ग्रहस्य बलाभावो ज्ञेयः अत्र भौमस्य गतितुल्याः कला द्विगुणा बलं भवति बुधस्य गतिकलाः ष
ड्गुणा एकोनाशीति ७९ हृता बलं भवति गुरोर्द्वादशगुणा शुक्रस्य स्वस्य शरहिता शनेस्त्रिगुणाः इति मथितार्थो राम
गुरुसम्प्रदायाद्ज्ञेयः इति चेष्टाबलम् अथ दृग्बलम् तत्रैव लग्नं पश्यन्ति यावन्तः स्वावीयेस्यात् शुभदृ ॥ २५

ष्टस्यच पापग्रहस्य तुर्य्यं दृशो नितस्य पादोनम् अत्र यस्य ग्रहस्य यावती लग्नस्योपरि दृष्टिस्तावदेव तस्य दृग्बलं अथ
शुभदृष्टस्य ग्रहस्य यावती शुभदृष्टिस्सा पादोनावलं स्यात्परं तु क्रूरतुर्यदृष्टिरहितो ग्रहो यस्मिन्तः तत्सम्भवेन बलमिति
वीस्यते लग्नं सबलोऽपि इति समरसिंहः इति दृग्बलम् अथ लग्नादिद्वादशभावसहमानां बलानयनमुक्तम्युक्त्या बल्याम्
तन्वादिकानामिह सद्मनां तु पत्युर्बलं तन्वैव बलम्प्रदिष्टम् स्वनाथ जीवज्ञदृशा समेतन्नृभेषु रूपान्वितमाप्यमेषु च
तुष्पदाख्येष्वपि चार्द्धयुक्तं नकीटभे किन्त्वनयोजनीयम् शुभाशुभव्योमगदृग्वियोगायुगाशयुक्तानमितिस्फुटस्यादिति
विशेषमाह वामनः स्वस्वस्वामि बलत्वेनज्ञेयो राशिर्बलाधिकः जीवज्ञयुक्तो दृष्टो वा स्वस्वस्वामियुतेऽस्मिन्तः पृष्ठोदयाः
कर्किमृगधनुर्मेषवृषाख्यमी शेषाः शीर्षोदयाज्ञेया मीनस्तूभयतस्स्मृतः शीर्षोदयादिनबला अशेषा रात्रिबला
स्स्मृताः नृराशयोऽबलनस्या दशमस्थाश्चतुष्पदाः वृश्चिकस्सप्तमस्थाने चतुर्थे जलराशयः संध्यायां वृश्चिको राशि
र्दिवसे नरराशयः रात्रौ बलाढ्याश्शेषास्युरित्थं राशिबलस्मृतम् इति राशिबलं प्रोक्तं पुराणाचार्यसम्मतम् ५ अथा
पृथाग्रहाणां बलफलमुक्तं पद्मनाभेन अत्रैकैकं प्रतिसार्द्ध विंशोपकं बलं ज्ञेयं सम्पूर्णबलं षड्विंशोपकात्मकं
मध्यमं बलं त्रिविंशोपकात्मकं न्यूनं मध्यमबलं ज्ञेयं तद्यथा शून्ये हानिस्तथा क्लेशो द्वादशो को महद्भयम् [illegible] सम
तयो हेगोरूपे प्रोक्तमिदं फलं सार्द्धं रूपेन नोः पीड़ा द्वाभ्यां दुःखसुखं समं सार्द्धद्वाभ्यां सुखावाप्तिस्त्रि [illegible] भागः सुख

हा० धनं सार्द्धत्रयेसर्वैसिद्दिश्चतुर्भिः सर्वतोयशइति नष्टबलानांसूर्यादीनां फलमुक्तंतेजः सिंहेनखगहस्ति[illegible]भि
र० वादिरवौविनष्टेऽर्थस्वयोरतिरुजोवनिजेलघुत्वं तेत्तानहानिरणुकृत्यचपुण्यतेज्येशुक्रेतलभोगसुखनानु[illegible]
२५ भीः शनौचेति अणुवृत्तिरल्पवृत्तिरपपुण्यतापुण्यराहित्यंअनुगाभीः स्वप्नेवकाइयं अथप्रसंगादिष्टकष्टविचा
रोलिख्यते तत्प्रयोजनमुक्तंरत्नावल्यां ताजिकोक्तफलादेशः प्रकर्तुंशक्यतेयतः इष्टकष्टफलज्ञानान्निर्णय
लेरव्योच्यतेस्वोच्च १ मित्रोच्चगो २ मार्गी ३ सुहृत् ४ सौम्या ५ वलोकितः उदितः ६ सौम्यचारीच ७ त्रिविकोणाध्य
३।५।९। ११ गोथवाववर्गोत्तमे ९ मित्रवर्गे १० स्वगेहे ११ सूर्यभागगः १२ सूसरिःफो १३ शुभशीलः सौम्यः १४ सौम्यांत
गो १५ युतः १६ एवंवलयुतः खेटोज्ञेयः षोडशधावुधैः नीचे १ शत्रुच्चगो २ वक्री ३ रिपुपा ४ पापवलोकितः ५ अस्त
गो ६ याम्यभागस्थो ७ लग्नाद्रिष्फारिषुस्थितः ८ वर्गोत्तमविहीनोयः ९ शत्रुवर्गे १० गृहेपिच ११ सूर्यभागोभि
तः १२ क्रूरेरिष्फो १३ शुभशीलोपिच १४ पापयुक्तो १५ मध्यगतो १६ ज्ञेयः खेटोवलोज्झितइति अत्रशुभस्था
नगेग्रहेशुभफलरूपमितंस्थाप्यं अशुभस्थानगेग्रहेअशुभफलरूपमितम् स्थाप्यंपुनश्शुभाऽशुभफलयो।
रंतरेकृतेसतियच्छुभमशुभंवात्रावशिष्टंतदेवग्रहस्यइष्टंकष्टंवाफलन्दशाफलादिषुज्ञेयम् एतत्पष्टमुक्त राम
म्माणिक्येन सर्वत्रकल्पमष्टयोगेवरूपम्फलंशुभाख्यम्फलनिर्णयाय इहापिरूपंपरिकल्प्यसाध्यम्फलन्त्वक २५

कष्टाभिधमत्रतज्ज्ञैः पृथक्स्थितस्यास्य यदन्तरालम्फलं तदेवाभिधमत्र वेद्यम् दशाधि १० केष्टफले च पूर्णाम्फलन्दशो १० नकथितन्त्वमध्यम् कष्टाधिके पूर्णाशशाङ्कः १० हीनेशुभे चकष्टेदशतोवरिष्ठे कष्टातथाकष्टुतरंनिरुक्तम्फलन्दशायांयवनैः पुराणैरिति अथपञ्चवर्गोभ्यइष्टकष्टमुक्तन्नाजिकमुक्तावल्याम् दलन्दलार्द्धन्त्वनदर्द्धकन्त्वस्वकीयमित्रारिरहेस्वभेस्यात् तथैवद्रक्काङ्गलवस्तदर्द्धन्तान् स्वराडकन्नन्दलवेर्कभागः तदर्द्धकन्नद्दलमेवत्रिंशेतिथ्यंशकोर्द्धन्त्वदलन्तथाधः नवांशकोर्द्धन्त्व दलन्त्वनीचेशून्यङ्कवेदांशनवांशकोचेति एतद्रूनयद्वास्वेष्टाणाणि पुद्वाद्दशांशास्याद्युक्तवलविभागांशङ्कष्टफलंसाध्यम् इतीष्टकष्टविचारः अत्रकेचनसामान्येनैव अष्टधावलङ्गत्ययन्ति उक्तन्त्वहिल्लाजेसमगति १रुद्दितोयः २सौम्यदृष्टोथ३युक्तः४सशुभमुथशिलीस्यात्सौम्यभावेद्दर्कभागे७विचरतिशुभमध्ये८चातिवीर्य्यः प्रदिष्टः कथितवलविरोधी हीनवीर्यःखगेन्द्रः उभयवलसमासेचाप्यभावेनयोर्वाविचरतियदिखेटोमध्यवीर्योसुनीन्द्रैरिति अत्रसमगतिविरोधः शीघ्रगतिउदितविरोधोस्तगः एवंसर्वत्रापिज्ञेयं अत्रप्रत्येकंसार्द्धविंशोपकद्वयमितंवलंज्ञेयम् अथात्रविशेषफलजिज्ञासुना पूर्वो

| गृह: | | | द्रेष्काण | | | नवांश | | | त्रिंशांश | | | उच्च | | | नीच: | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्व | मि | श | स्व | मि | श | स्व | मि | श | स्व | मि | श | स्व | मि | श | स्व | मि | श |
| १/२ | १/४ | १/८ | १/६ | १/१२ | १/२४ | १/१२ | १/२४ | १/४८ | १/१५ | १/३० | १/६० | १/२० | १/४० | १/८० | [illegible] | [illegible] | १/२० |

हो
र
२६

कंषड्विधमपि लग्नविचार्य्यन्तरभावे सामान्यपञ्चवर्गीवलं विचार्य्यंतरभावेष्वप्येवलग्नविचार्य्यो... सि...।
न्तः अथ द्वादशवर्गीचक्रम् तत्रवामनः गृहहोराद्रेष्काणाः पादांशः पंचांशषष्ठांशौ सप्तांशनवदशांशाः द्वादशां
शांशाश्च भौमशुक्रज्ञ चन्द्रार्कबुधशुक्रारमहिजाः शौरिश्शनिस्तथाजीवो मेषादीनामधीश्वराः लग्नादेर्जायते हो
रा सर्वलग्नेषु सर्वदा ओजराशिभवार्केन्द्वोः समे चन्द्रार्कजामता मेषादि सर्वराशीनां त्रिभागेषु यथाक्रमं आद्यपं
चनवेशानां द्रेष्काणाभणिता बुधैः एकद्वित्रिचतुर्थेषु लग्नपादेषु चक्रमात् स्वस्वराश्यादिकेंद्रेशाः पादांशना
यकामताः ४ कुजार्कीज्यबुधाः शुक्रः पंचमांशेषु नायकाः ओजराशिषु युग्मेषु तद्व्यत्ययतः स्मृताः मेषाद्यावि
षमेराशौ समराशौ तुलादिकाः विज्ञेयाविबुधैरेवं राशिषष्ठांशनायकाः ६ ओजराशौ स्वराश्याद्यास्तमे सप्तराशितः सप्तां
शनायकास्सर्वे विज्ञेया विबुधैस्स्फुटाः ७ मेषाद्याश्चरराशीनां स्वात्पाद्यास्स्थिरराशिषु द्विस्वभावेषु सिंहाद्याः ज्ञे
याश्चाष्टांशनायकाः ८ मेषमृगतुलाकर्कमुखास्युर्नवमांशकाः मेषकेशरिधन्वादिराशिचक्रे व्यवस्थिताः ९ अजकुंभ
धनुस्त्रीलिसिंहयुग्मक्रमेण तु दशांशनायकालग्ने ग्रहानेवम्बिदुर्बुधाः १० मेषमीनघटानक्रचापालितुलकन्य
काः सिंहकर्कटगोस्त्र्यादिका रुद्रांशनायकाः ११ स्वस्वराश्यादिका ज्ञेया द्वादशांशकनायकाः १२ एवं लग्नेत्र विज्ञे
या बुधैर्द्वादशवर्गिका सूर्य्यादीनान्नु खेटानामपीस्याद्द्वादशवर्गिका शुभा स्वमित्रसौम्योच्चविन्यानीत्वारिपापजा ।

लहयन्वोस्यनहिशोध्यमपरस्परम् न क्षेपनात्फलंतेयंग्रहे द्वादशवर्गजम् वर्गेशुभाधिके क्रूरःशुभस्सौम्योतिशोभ
नः निद्याधिके शुभः क्रूरः क्रूरोतिक्रूरतामव्रजेत् स्वगृहाद्युच्चहोदनेनत्वादिभावजम्फलम् निजवीर्यानुमानेन
स्थितं राशीशभावजम् एकैकराशिमध्यस्थंविज्ञेयंराशिमण्डलम् तन्वादिभावरूपेणस्वगृहादिक्रमेणच तेचद्वा
दशवर्गस्यस्थूलसूक्ष्मप्रभेदतः स्थूलंसूक्ष्मंफलंज्ञेयंग्रहाणांसर्वभावजमिति अत्रैकैकराशिमध्यस्थमित्यनेन
तन्वादिसर्वभावानांद्वादशवर्गिकाविधेया तस्माद्भावानांस्थूलसूक्ष्मफलविचारःकार्य्यइत्यर्थः एतत्स्पष्टमुक्तंसंज्ञा
तन्त्रे भावेषुसर्वेष्वपिवर्गचक्रम्विलोक्यतत्तत्फलमूहनीयमिति द्वादशवर्गीचक्रेविंशोपकानयनमुक्तं। योग
सुधानिधौ शतंकलाः १०० स्वभवनादिकेचमैत्रेतदर्द्धञ्च ५० रिपौतदर्द्धं २५ तदैक्यमभाज्ञ. ६० हृदर्कवर्गोविं
शोपकाविंश्यंयुतोभवतीति अत्रकेचनद्वादशवर्गीचक्रन्नकुर्वन्तिपरन्तिच वामनेनग्रहणाचाप्रोक्ता द्वादशवर्गि
का पुराचार्य्यैरनुक्तत्वात् कृत्रिमासाप्रकीर्त्यतेपि एतन्नरमणीयंयतोतिप्राचीनाचार्येणमणित्थेन भौमः सितोज्ञइ
त्यादिश्लोकदशकेनद्वादशवर्गीचक्रमभिहितम् अतएवसंज्ञातंत्रेश्रीमन्नीलकंठदैवज्ञेर्द्वादशवर्गीचक्रमुक्तमि
ति इतिद्वादशवर्गीचक्रम् अथग्रहाणांहर्षबलंतत्रचत्वारिहर्षदानिस्थानान्युक्तानितेजासिंहेन निधि [illegible]
नाशः३ घटे६ क१ शिवा११ अज५ व्यय१२ इनात्प्रथमंखलुहर्षदम्स्वगृहमुच्चमथोहितयं स्मृतानि [illegible]

रोषु तृतीयकं अथ दिने नृखगस्य तु योषितो भवति रात्रिषु हर्षपदं तथा उदयतस्त्रितयं त्वनयं क्रमाद्धूनमतो ॥ १।२।३।७।८।९ नृद्युसदां च ४।५।६।१०।११।१२ चतुर्थकं अत्र समरसिंहेन द्वितीयकं निजगृहं सर्वेषां हर्षपदं भवतीत्यनेन श्लोकार्द्धेन स्वगृहमेव हर्षस्थानमुक्तं न तु स्वोच्चमिति ज्ञेयं अत्र विंशोपका उक्ताः पद्धतिभूषणे हर्षान्विता हर्षपदे पंच विंशोपका मताः हर्षस्थानचतुष्कस्थः खेटः स्यात्पूर्णहर्षितः इति अत्र समरसिंहटीकायां तु कश्चित् ज्योतिर्विद्भिरेकैकहर्षस्थाने रूपमितं बलमुक्तम् तत्रापि नवमादिस्थानेषु लग्नोक्तित्रिभेषु च पूर्वोक्तयुक्त्या ग्रहाणां भावफलमेव बलं स्वगृहोच्चबलं तु राश्यंते परमोच्चं तु प्रोचुर्ग्रहविदो जनाः राश्यंते पूर्णफलदं स्वगृहं च तथा विदुरिति जीर्णताजिकवचनात् स्वगृहस्वोच्चस्थग्रहस्यांशादिकं द्विगुणं स्वगृहस्वोच्चबलं भवति दिनरात्रिबलं तु पूर्वोक्तग्रहदिनबलमेव पुनर्ग्रहाणां विशेषबले प्रथमहर्षबलं दिनरात्रिबलं च योजितमेव ततो हर्षस्थानद्वयबलं विशेषबलेषु योज्यमिति तत्त्वम् सर्वेषां बलानामैक्यं स्फुटबलं भवति स्फुटबलेन वर्षेशफलं दशाफलादिकं च ज्ञेयमिति विमलं प्रथमहर्षबलेऽधिकहर्षस्थानानि केषांचिद्ग्रहाणामुक्तानि प्रहृष्टमैक्षमवेक्षमेवं धु धनं चैवेन्दोस्तुर्यं ज्ञस्योदयं रवेः द्यूनं भौमस्य धर्मं शशिनः प्राहुस्स्म हर्षदमिति याद्ववनतु पञ्च हर्षस्थानान्युक्तानि ॥ नन्दाग्नितर्केन्दुशिवेध्विनाख्यास्तूर्याद्रिकानां स्वगृहत्रिजोच्चम् पुंस्त्रीखगानां तनुतस्त्रयं च

निशादिनेस्त्रीनरसंज्ञितानाम् पुंभानिपुंसांवनितागृहाणिस्त्रीव्योमगानाञ्च यदास्यदानि हर्षास्यदेष्वपि
४ विंशोपकाश्च पृथक्पृथक्चस्युः सम्वदन्ति इतिश्रीदैवज्ञवर्य्यपण्डितदामोदरात्मजबलभद्रविरचितेहाय
नरत्नेहृष्टिसाङ्गबलस्फुटरूपाद्यानयनाधिकारो द्वितीयः २ अथषोडशयोगाध्यायो व्याख्यायते यत्रैक्कवालादिषो
डशयोगानान्नामान्युक्तानिताजिकभूषणे इक्कवालेन्दुवारस्या २ विन्थशालस्ततः परम ३ ईशराफ ४ श्चन
क्त ५ स्त्वयमया ६ मणऊ ७ ततः कम्बूलई ८ रि कम्बूल ९ खल्लासरक १० रद्दके ११ ततो दुः फालिकुत्थश्च १२
दुत्थदवीर १३ तम्बिरो १४ कुत्थश्च १५ दुरुफश्च १६ ते योगाः षोडशकीर्तिताः ताजिकाचार्यवर्य्यैश्च फलविज्ञान
हेतवे अथेत्थशालादियोगोपयुक्ताः सूर्य्यादीनान्दीप्तांशा उक्ताः तेजस्सिंहेन ईस्पतेर्कइहपञ्चदशांशैर्दीप्तके ।
श्वरविभि १२ विधुरारः स्त्वष्टभि ८ र्भृगुमृगाङ्कतनूजौसप्त ७ भिर्गुरुशनीनवभि ९ रस्मीति ताजिकसारेपिरविस्त्रिंशा
शांशे १५ स्तपनेः १२ शशांकोर्कलवैर्महीजोवसुभिश्चभागैः नभोगैर्भौमे ९ दैवेज्यमन्दोप्रयुतिङ्गतोति
श्चत्रपञ्चदशभिरंशैः रविः प्रयुतिमित्थशालादियोगङ्गतोति स्यर्थः एवं सर्वत्र प्रश्नवैश्मवे राहोरपिद्वा
दशदीप्तभागा उक्ताः अथैकवालेन्दुवारो तत्रैक्कवालेन्दुवारयोर्लक्षणमुक्तं संज्ञातन्त्रे चेन्क राटके १।४।७।
१० पराफरेन्च २।५।८।११ ॥खगाः समस्ता स्यादिक्कवाल इति राज्यसुखाप्तिहेतुः आपोक्लिमे ३।६।९।१२

हा॰ र॰ २८

यदिखगाः सकेलेंदुवारोनस्यात्स्वभः क्वचनताजिकशास्त्रगीनइतिमत्रवर्षप्रवेशेइक्कवालयोगोस्तितोराज्य
सुखयोर्लब्धिः कुलानुमानेनवाच्या वर्षांतिश्चेष्यादिशुभंगावाच्यः क्वचनवर्षप्रवेशमासप्रवेशादौ यदा केंद्रापो
क्लिमस्थाग्रहाः पणफरापोक्लिमस्थावास्युस्तदा कोपि योगोन संभवेत् सर्वेग्रहा हि त्रिष्वपि केंद्रादिषु स्थि
तायोगकर्तारोज्ञेयाइतिजीर्णटीकाकृत् यादवेनतो योगोन्यथैवकथितो केंद्रस्थितहितयराशिगयोःस्व
धाम्नोर्दृष्टिसत्वादिनिगदितोत्रसइक्कवालः आपोक्लिमोपगतकेंद्रगयोर्यदिस्याद्योगस्तदामुनिवरैरयमिंदुवा
रइति द्वयोरेवग्रहयोः केंद्रपणफरसंस्थयोर्दृष्टौसत्यामिक्कवालयोगः दृष्टौसत्यांकेंद्रापोक्लिमस्थयोर्द्वयोरेव
ग्रहयोरिंदुवारयोगइतियादवमतं अत्रदीप्तांशेर्दृष्टायोगाःसंभवंत्यतोयादवोक्तएवपक्षःसाधीयानितिचव्रयंतो
यमयायोगसर्वैस्ताजिककर्तृभिर्दृष्ट्यभावउक्तास्ततोस्ति इत्थीक्कवालेंदुवारो अथेत्थशालः तत्रवर्तमानपरिपूर्णभवि
ष्यन्मुथशिलभेदेनत्रिधेत्थशालयोगः तत्रवर्तमानमुथशिलयोगलक्षणमुक्तंताजिकालंकारे दृष्टौसत्यां प्राक्तदीप्तां
शभागैर्मंदात्खेटाच्छीघ्रखेटोयदाल्पैः अंशैस्तुल्यःकिंचिदूनस्तदेत्थशालोयोगोमुथशीलः सएवेति अत्रे
त्थशालादियोगेषुग्रहाणांशीघ्रत्वंमंदगत्वंचस्पष्टगत्याज्ञेयं अत्रकेचिच्छीघ्रमंदग्रहयोरेकराशिस्थयोरेवमुथ
शिलयोगः ततःपंचमादिभिन्नराशौयत्नःसमरसिंहेनमध्यमाधमकत्वूललक्षणमेषस्थेऽशनिनाकर्कस्थेभूभु

राम २८

त्प्रष्टस्यत्वंयथासम्भवमेवप्रदर्शितं सर्वयोगेष्वपिमुथशिलविचारोग्रहाणामेकराशिगानांभिन्नराशिगानामपिभ
वत्येवेतिस्पष्टमभिहितंच अत्र स्वदीप्तांशैर्द्वादशांशैर्वामुथशिलयोगादयोविचारणीयाइत्युक्तंताजिकतिलके स्व
दीप्तभागैरविभागैर्वायोगाविचार्यामुथशीलमुख्याइति अथपरिपूर्णमुथशिललक्षणमुक्तंयोगसुधानिधौ वि
कलिकाकलिकादलहीनकः खरखगोल्पजवादथवासमः मुथशिलंसकलंसफलंनृदा फलतिनद्यवनोमुनिराट्
जगौ भविष्यन्मुथशिलयोगलक्षणमुक्तंवामनेन राश्यंतगःशीघ्रगतिःस्थिरस्यभागान्वितश्चेत्परराशिगस्य यदाभवे
त्प्रवदंतियोगमेष्यंभविष्यत्फलदंसदैव समरसिंहमतेवर्तमानमुथशिलयोगाय भविष्यन्मुथशिलयोगाय भवि
ष्यन्मुथशिललक्षणमुक्तंतेनैवयद्युक्तभागतोसौहीनांशैर्मंदगृहस्तोभवति तन्मुथशिलंभविष्यद्गणनीयंकार्यसं
सिद्धौ अत्रेत्थशालयोगेपृष्टस्यैशीघ्रेवक्रिणिसतीत्थशालफलाभावः अग्रस्थेमंदेवक्रिणिसतीत्थशालफलवि
शेषइतिसंप्रदाययुक्तिः वर्तमानमुथशिलोदाहरणमाह यास्वःचश्चिकेभवतिभूसुतस्तनोभागषोडश१६इतोहगेह
यंवासमांशकमितोनतदात्थिकाराज्यलब्धिरपरेविलालयं अथपूर्णमुथशिलोदाहरणंजीर्णताजिके स्त्रीलाभ
स्यप्रश्नेकर्कविलग्नेशशीवृषेद्विभागाढ्यःसाष्टादशकलिकाढ्यःकौर्प्येमंदोद्विभागमितःएकोनविंशतिकलासहि
तोयंपूर्णफलदःस्यात् अथवर्षप्रवेशेयदिकोपिपृच्छतिममास्मिन्वर्षेस्त्रीलाभोभविष्यतिनवेति एवंविधेप्रश्ने

लग्नेशकार्येशयोः परिपूर्णेत्थशाले स्त्रीलाभो वश्यम्वक्तव्यः एवमग्रे सर्वत्र ज्ञेयम् अथराश्यन्तराश्यादिस्थितग्रहेत्थशालोदाहरणम् वृषलग्ने लाभस्य प्रश्ने कर्मेन्त्यभागा २९ गश्शुक्रः वेदांशमितो मीने गुरुरेवं मुत्थशिलो योगः अथ भविष्यन्मुथशिलोदाहरणम् तुलाविलग्ने भृगुजश्शरांशैः कर्केद्रिचन्द्रैः क्षितिजोन्त्यराशौ धनस्य लाभेक्षि थितो भविष्यद्योगस्स एवेभाविफलप्रदाता अथेत्थशाले फलनिर्देशप्रकार उक्तस्संज्ञातन्त्रे लग्नेशकार्याधिपत सहायायत्रसुरस्मिन् पतिसौम्यदृष्टे तदा वलाढ्यं कथयन्ति योगस्विशेषतः स्नेहदृशेतिसन्नः सहायो नाम मित्रम् ॥ लग्नेशः लग्नेशमित्रकार्येशः ३ तन्मित्रं सने चत्वारो यत्रभावे सुस्तस्मिन् भावे पति सौम्यदृष्टे सति वली योगः अथभावदशासहमनसीरमुथ हाद्देशादयोपि यत्रभावे सुस्तस्मिन्भावपतिसौम्यदृष्टे सति तेषांसवलस्यादिति समरसिंहटीकाकृत ॥ स्वक्षादिसंस्थानगतः शुभैश्च युते क्षितोभूत्र विनाप्यथास्ते तदाशुभं प्रागभव ।

पूर्णमुथशिलयोगः स्त्रीलाभप्रश्नः

भविष्यन्मुथशिलयोगः धनलाभप्रश्नः

वर्तमानमुथशिलोदाहरण राज्यलाभप्रश्नः

प्रकारान्तरमुत्थशिलभागः लाभयोगप्रश्नः

हा. र. ३०

सुपूर्णमग्रे भविष्यत्यथवर्तनेन चात्यस्तस्माद्विपरीतभावे येथ्संज्ञो निष्टग्रहस्य प्रपन्नः अभूच्छुभमप्राग्शुभन्त्वि
दानीं संयातुकामेन च भावि वाच्यम् अयमर्थः लग्नाधीशः कार्याधीशो वा विपरीतभावे शत्रुनीचादि दुःस्थानेषु
गतः सन् पापैर्युक्तः इत्थसालो वा भूत्तदा प्रागशुभमभवत् एवं सर्वत्र संयातुकामेन राश्यन्तस्थेन शीघ्रेण पापग्रहेण रा
शौ संयातुकामेन कृत्वा भविष्यदनिष्टं वाच्यमित्यर्थः भावदृशाद्विनयः अथेत्यशाले विंशोपकानयनं एकस्य
शीघ्रग्रहहीनमंदग्रहस्य भागैरहिता विधेयाः एकस्य शीघ्रग्रहदीप्तभागाः एकस्य शीघ्रयुतिभागभक्ताः फलं पु
नः पञ्चनखसं २० गुणं तद्विंशोपकाः स्युर्मुथशीलमुख्ये इति उदाहरणं मंदग्रहो भौमो राश्यादिः ७।१६ शीघ्रः सूर्यो
राश्यादिः ६।१२ अत्र सूर्यस्यांशाः २ भौमस्यांशा १६ हीनाः १४ एभिः सूर्यस्य दीप्तांशा १५ हीनाः शेषं १ सूर्यस्य दी
प्तांशा १५ भक्ते लब्धं ०।४ पुनर्नख २० गुणं जाता इत्थशाले विंशोपकाः १।२० अथ षोडशयोगप्रान्त्ये लिखितयाद्व
र्त्तनावधिदिनानयनं तत्र भौमार्कयोरंशान्तरं १४ द्वादशगुणं १६८ जातान्यवधिदिनानि एवं सर्वत्र ज्ञेयं वर्षल
ग्ने सौम्यग्रहेत्थशालफलमुक्तं ताजिकसारे यदीत्थशालः खचरैस्तु सौम्यैः कृतो हि लग्ने परिपूर्णकस्य द्दगेन तस्मै
विविधं विलासं धनागमं कान्तिविवर्द्धनं च नेति इत्थशालादीनां फलं जीर्णताजिके इत्थशालस्य यत्कृतोपमया न
तमन्यतः ईसराफः स्वयं दत्तं मणाऊ चान्यहस्तात् खल्लासरैः फलाभाव इति वर्षे विचिन्तयेत् अत्र लग्ने।

राम ३०

कार्यभावेशयोरित्थशालादियोगोत्पन्नो यत्फलं वाच्यमिति इत्थशालः अथेसराफयोगः तत्रेसराफयोगल
क्षणं ताजिकभूषणे शीघ्रग्रहो मंदगतेर्ग्रहात् यदैकभागं पुरतः प्रयाति तदेसराफस्तु मूसरीफः पुरातनैर्दु
ष्टफलः प्रदिष्टः अथ शीघ्रग्रहस्य मन्दग्रहस्यैकांशातिक्रमणे इसराफयोगः एकांशपूर्णैः कलानामतिक्रमणे
पीत्थशालयोग इति जीर्णटीकाकृत् अत्रेसराफयोगस्सौम्यग्रहजनितः शुभं इत्युक्तं हिल्लाजे ईसराफे सौम्यजा
ते कार्यभङ्गो न जायत इति अथ शीघ्रग्रहो मन्दमतिक्रम्य द्वादशांशाभ्यधिको भवेत्तदापि मूसरिफः शुभफलद
एवेत्युक्तं यादवेन चरो चराच्चेद्रवलव्युरस्तादीसराफकः शुभो न मूसरीफकः शुभोऽर्के १२ भागगस्तु चेत् अत्रोदा
हरणमाह सप्तव धनुर्विलग्ने गुरुरष्टि १६ ॥ भागैर्बुधाद्विचन्द्रे १७ मिथुनङ्गतोत्र न कन्यकायाव्रलाभसिद्धिस्या
त्पिराडनुस्ये २८ त्रबुधेनशाम्रिरिति अथेसराफयोगविशेषकानयनम् एष्यऽस्थमन्दग्रहहीनशीघ्रग्रहस्य भागा
न खमद्गुणाश्च अग्रस्थशीघ्रग्रहदीप्तभागैर्भक्ता विशोपास्सु रिहेसराफे इतीसराफयोगः अथ नक्तयोगः तत्र
नक्तयोगलक्षणं संज्ञातन्त्रे लग्नेशकार्याधिपयोर्न दृष्टिर्मिथो यत्तन्मध्यगतोऽथ शीघ्रः आदाय तेजो यदि दद्यसं
स्थात्मसेद्यात्यत्र हि नक्तमेतत् अन्यत्र मन्दग्रहे पृष्ठसंस्थाच्छीघ्रग्रहादित्यर्थः अत्र सर्वत्र स्वदीप्तांशमध्ये यदि
शीघ्रग्रहान्मन्दग्रहोऽधिको भवति तदा शीघ्रो मन्दस्य तेजो दाता मन्दश्शीघ्रस्य तेजो हर्तेत्यर्थः दीप्तांशमध्ये शीघ्र

ग्रहाभ्यूनांशोमन्दग्रहेशीघ्रोमंदस्यतेजोहरः मंदश्शीघ्रस्यतेजोदानात्तेयः वक्ष्यमाणमणाऊ योगविशेषवाक्याच्छी
घ्रादधिकांशोन्यूनांशोपिमन्दश्शीघ्रस्यतेजोहर्ताभवतीतितत्त्वम् अत्रोदाहरणंसंज्ञातन्त्रेस्त्रीलाभप्रच्छातनु
रस्तिकन्यास्वामीबुधःसिंहगतोदशांशेः सूर्यांशकेदेवगुरुःकलत्रेदृष्टिस्तयोनास्तिमिथोथचंद्रः चापेद्वयो
र्वोभयदृश्यमूर्तिः शीघ्रोकेभा १२गेरथवामयांशैः११ आदायतेजोबुधतोददौयज्जीवायलाभः परतस्त्रियास्तत
अयमर्थः अत्रलग्नेशकार्येशयोः परस्परंषडष्टगत्वात् दृष्टिर्नास्ति अथशीघ्रश्चंद्रोन्योन्यंबुधगुरूचप
श्यन्स्वस्मादल्पांशाद्बुधात्तेजोगृहीत्वास्वस्मादधिकांशायगुरवेददौतस्मात्परहस्तात्स्त्रीलाभः अत्रस्थानदृष्टि
सद्भावेपिदीप्तांशानिक्रमेणनक्तयोगोभवतीत्युक्तयाद्रवेन लग्नेशकार्येपखगौनिजभागदृष्ट्याहीनावुभौचरखगौ
नरगाःप्रपश्यन् नीत्वामहस्त्वरगनेरचलापरद्याद्ब्लक्तंभवेदपरहस्तविलंबसिद्धौ अत्रोदाहरणमाह सत्वमीने

७ ५
८ ६ ४
९ ३
चं१२
१० ११ ३ २
११ बृ१२ १ ११

विलग्नेगुरुरर्कभागस्त्रियामुधोनेत्रलवोनदृष्टिः तयोश्चमध्येऽद्रि७लवःकुलीरेचंद्रस्तदा
त्येनसत्वेगनाप्तिरिति इतिनक्तयोगः अथयमयायोगः तत्रयमयायोगलक्षणमुक्तं ताजि
कभूषणे परस्परालोकनवर्जितयत्खेटद्वयंपश्यतिमंदखेटः दीप्तांशकैर्धामचराङ्कहीं
त्वास्थिरापदत्तेयमयाभिधानः अयमर्थः परस्परालोकनवर्जितखेटद्वयंलग्नेशकार्येशा

मिथंतृतीयोमंदग्रहः स्वदीप्तांशैर्लग्नाधीशकार्याधीशौस्थानदृष्ट्या पश्यन् पुनरुभयोर्मध्येशीघ्रा न्तेजोनीत्वामंदगा

मरच"यमयाख्योयोगस्स्यात् अत्रोदाहरणांसज्ञातन्त्रे राज्याप्तिप्रच्छानुललग्ननाथोमेषेसितस्त्वष्टि १६ ल

वैषस्थः चंद्रोरसांशे ६ यदिराज्यनाथोदृष्टिस्तयोर्नास्तिगुरुस्तुमन्दः द्विगांशक कर्कगतस्तुपश्यन्तु भौम।

होरेप्रलवैस्सचान्द्रम् दृष्टोसितापेतिपद स्यलाभोमात्येनभावीतिविमृश्यवाच्यम् अत्रलग्नेशकार्येशयोर्द्विद्वो

दशकत्वादन्योन्यदृष्टिर्नास्तितृतीयोगुरुर्मन्दगामीकर्कस्थोदशांशः लग्नाधीशकार्याधीशौस्थानदृष्ट्या पश्यन्

सन्स्वल्पांशाद्विमांशोस्स्वदीप्तभागैस्तेजोगृहीत्वाबह्वंशायगुरुकार्यद्दौतस्मान्मंत्रद्वारयाराज्यलाभोमात्येनवा

च्यः॥इतियमयायोगः॥अथमणऊयोगः॥तत्रमणऊयोगलक्षणमाहयादव: भौमोवारविजश्चरस्यपुरतः पृष्टे




थवासंस्थितः पश्यन्शत्रुदृशा१।४।७।१० स्वदीप्तलवकैर्हीनैरहीनैरपि यत्कार्यार्थमथोक्तस्तु

शशिलग्नत्रस्थितोवाग्रहो गृह्णातीहमहोमणऊर्निगदितो योगोर्थनाशेपदः मनुष्यनाजिकेस

मरसिंहोपि जातेपियोगेरविजोथभौमश्शीघ्रस्यपृष्ठेथपुरोरिदृष्ट्या स्वांशैर्ग्रहस्तैकगतस्तु

हीनाधिकैश्चसः स्यान्मणऊनशस्तइति पूर्वपद्यस्यापमर्थः भौमश्शनिर्वालग्नेशकार्ये।

शयोर्मध्येशीघ्रग्रहस्याग्रे पृष्ठेवास्थित्वाचतुर्थेदशमसप्तमैकराशिदृष्ट्यापश्यन्सन् स्वदीप्तांशै

हीनैरधिकैर्वांशैर्ग्रस्ते जो ग्रहस्तानि तत्र लग्नेशकार्येशयोरित्थशालेपि कार्यनाशको मणऊ योगः अथवा यत्कार्येनि मित्तं लग्नेशकार्येशाभ्यां यस्मिन् स्थाने मुथशिलं कृतं तत्र द्वयोरेकस्थानगो भौमः शनिर्वा हीनैरधिकैर्वा स्वदीप्तभागै र्द्वयोरेकस्य वा तेजो गृह्णाति सोपि मणऊ योगः कार्यनाशको ज्ञेयः अत्र श्रीहरिभट्टदैवज्ञकृतसमरसिंह श्लोकः भौमः शनिर्वा यदि मूथशिली सराफ वान् शीघ्ररिपुग्रहेण लग्नेशकार्याधिपतीत्थशाल फलप्रणाशी मणऊ शुभो न अत्रोदाह रणमाह यादवः कन्याविलग्ने स्तिबुधोस्तनाथो दशांशके गिरसा द्विचंद्रैः मीने च युग्मे श्वनिजो भवांशैः रसो बुधस्तेन न चांगनाप्तिः पृष्ठेपि भौमेन वभिस्तथैव मीने कवि र्हस्ति दमितो त्र पूज्यः नृपे श्वतन्नार्कसुतेन वांशै र्नगै ७ श्च पृष्ठे न हि कार्य सिद्धिः कर्के विलग्ने नसितो कविर्दिनांशै १५ र्वृषभे च चंद्रे १० र्हिमगुः कुजो त्र भू पैर्लवैः १६ भूमिसुतेन चंद्रो हतस्ततो नात्र भवेदर्थलाभ इति अत्र प्रथमोदाहरणे दशमस्थो भौमो लग्नगं बुधं तु पदृष्ट्या पश्यन् बुधाद्दल्पांशादेकेनांशेनाधिको भूत्वा बुधतेजो हरो जातः अत्र । स्त्रीलाभप्रश्ने कार्येशलग्नेशयोर्गुरुबुधयोरित्थशालेपि बुधस्य तेजो हीनत्वात्स्त्रीलाभो न च वा। च्यः अथ हरतेतेजः स्वांशैरहीनैरधिकैश्च मणऊ योगोसावितिविशेषः समरसिंहवाक्ये न शीघ्रग्रहाद्बुधादल्पांशो मन्दग्रहो भौमो नवांशमितोपि बुधतेजो हरो जातस्तस्मान्नवांशमितभौमे मणऊ योगत्वात्स्त्रीलाभो न वाच्यः द्वितीो

पुनर्नक्तयोगः

| | | |
|---|---|---|
| २ | १ | ११ |
| | १२ र१२ | १० |
| ४ चं७ | ३ | ९ |
| | ६ बु | ८ |
| | ५ | ७ |

यो दाहरणे शुक्रशन्योर्योगोऽयं ॥ अथ तृतीयोदाहरणे लाभप्रश्ने कर्कलग्नं तत्र शशिनोंऽशा द्वादशांशास्त्रै वक्रुजः
षोडशांशाः अत्र मंदो भौमः शीघ्रश्चन्द्रादधिकांशस्तस्माच्चन्द्रेण जोहरो जातः अत्र यद्यपि लग्नेशकार्येशयोरित्थशा
लयोगोऽस्ति तथापि भौमकृतमणऊयोगत्वाल्लाभो न वाच्यः एवमेकराशिस्थानैरप्युदाहरणं ज्ञेयं इति मणऊयोगः
अथ कम्बूलयोगः तत्रानेकभेदसहितकम्बूलयोग उक्तः संज्ञातन्त्रे लग्नकार्येशयोरित्थशाले चेन्दुरित्थशालतः
कम्बूलं स्वगृहमध्यादिभेदैर्नानाविधं स्मृतम् अत्र लग्नेशकार्येशयोरित्थशाले सति चेच्चन्द्रो लग्नेशेन कार्येशेनो
भाभ्यां वा चन्द्रो मुथशिलं करोति तत्कम्बूलम् । अत्र कम्बूलयोगभेदोपपत्तिः स्वगृहोच्चावस्थितिरुत्तमाधिका
रः स्वहद्दाद्रेष्काणनवांशावस्थितिर्मध्यमाधिकारः शत्रुनीचगृहावस्थितिरधमाधिकारः एतत्त्रितयाधिकाररा
हित्यं समोऽधिकारः यदाह यादवः स्वोच्चस्वालयशालिनार्यदिशशी स्वोच्चस्वगेहे स्थितः सुश्रेष्ठं निजहद्दगेहरा
हितोयेगेतदार्थेषकं स्वत्रैराशिकहद्दभागगतयोर्मध्यं [illegible] नेमिस्तनो हीनं हीनतरञ्च नीचरिपुभेयोगहद्दराजी हृचेत
हीनं समं हीनतरं मध्यममेवञ्चन्द्रस्य लग्नेशकार्येशयोश्चाधिकारगवेषणया कम्बूलमुत्तमोत्तमादिषोडशभेद
भिन्नम्भवतीति ज्ञेयम् अथोत्तमकम्बूललक्षणं संज्ञातन्त्रे यदीन्दुः स्वगृहोच्चस्थस्तादृशौ लग्नकार्यपौ इत्थशाली
कम्बूलं तदुत्तमोत्तममुच्यते अत्रोदाहरणं तत्रैव मेषे रविः कुजो वापि कर्कराशिगतः शशी तत्रेत्थशालात्कम्बू

लमुत    पोत्तमकार्येष्विति अत्रसन्तानप्रश्ने मेषलग्ने लग्नेशो भौमः स्वगृहे मेषलग्ने विंशत्यंशः पंचमभावाधी
शो रविः स्वोच्चे मेषे सप्तदशांशश्चन्द्रः कर्के स्वगृहे चतुर्दशांशः अत्रार्कभौमयोः कार्येशलग्नेशयोरित्थशालयो
गोस्ति चन्द्रोपि द्वाभ्यां सहेत्थशालं करोति तेन उत्तमोत्तमकम्बूलज्ञानम् उत्तमोत्तमकार्यं करोति सन्तानप्रा
प्तिरूप्यं कार्यमवश्यं करोतीत्यर्थः अत्र लग्नाधीशकार्येशयोर्मुथशिलसत्त्वे चन्द्रो द्वयोरन्यतरेण मुथशि
लत्वं करोति तदाप्युत्तमोत्तमकम्बूलं स्यादिति याववः अत्रोदाहरणमाह स एव मेषेऽङ्गेऽवनिजो नवांशकइनः
सिंहे कुभागः १ शशी कर्केपि गज २८ लवो हि चोत्तममतः कंबूलयोगः शुभ इति अत्र लग्नेशकार्येशाभ्यां चन्द्रो मु
थशिलं करोतीति मुख्यपक्षः अथान्येषां कम्बूलयोगानां संज्ञा तन्त्रोक्तलक्षणानि स्वकृतोदाहरणसहितानि
लिख्यंते तत्रोत्तममध्यम उत्तमसमयोर्लक्ष
णं स्वीयहद्दाद्रेक्काणांकभागस्थेनेत्थशाल
तः मध्यमोत्तमकंबूलं हीनाधिकृतिनोत्तमम
अत्र यदीन्दुः स्वगृहोच्चस्थ इत्यनुवर्तते हीना
धिकृतिनाधिविधाधिकरहितेन कोर्थः सम

उत्तमोत्तम

मणकंयोगः

मसाकंयोगः

मध्याकंयोगः

स्वगृहहद्दाद्रेष्काणनवांशस्थेनलग्नपेनकार्येशेनचेत्तोदाहरणं भागप्रश्नेतुलालग्नं स्वहद्दायां दशांशकः १० र
णमेसंस्थितः शुक्रोभाग्ययोत्तमश्चसप्तमे शक्रांशः १४ स्वीयहद्दायां चन्द्रः कर्कनवांशकः ९ योगेत्रयाणां कम्बू
लंप्रोक्तमुत्तममध्यमम् स्वनामसदृशं तेषु प्रणीतं कम्बूलजं फलं एवं स्वस्वनवांशेनुगतयोर्लग्नकार्येशयोः स्वगृहो
च्चगतस्येन्दोर्ते योगः मरण्वहि राज्यप्रश्ने युग्मलग्नं ३ बुधः कौर्प्येनगां ७ शक्रः समस्यज्ञस्य गेहे तु कर्कपं
चां ५ शक्रः शशी कम्बूलमुत्तमस्तमं त्रयाणामित्थशालतः अथोत्तमाधमकम्बूललक्षणं उत्तमाधमतानीचरिपु
गेहस्थितेनचेत् अत्रापि यदीन्दुः स्वगृहोच्चस्थः स्यादनुवर्तते उदाहरणं प्रश्ने स्त्रीलाभसंज्ञे तु तुलालग्नं च भार्ग
वः स्वनीचेयुवतीराशौ दशांशस्सप्तमाधिपः कुजस्स्वनीचेह्यर्यंशो विधुः कर्कनवांशकः त्रयाणामित्थशालत्वा
त्कम्बूलञ्चोत्तमाधमम् अथमध्योत्तमकम्बूललक्षणम् स्वहद्दादिगतश्चन्द्रस्स्वभोच्चस्थेनेत्थशालकृत् मध्यमो
त्तमेन च पूर्वस्मात् विशिष्यते पूर्वस्मादुत्तममध्यमकम्बूलात् उदाहरणम् भामिनीलाभके प्रश्ने तुलालग्नं तु
लोपगः शुक्रो धनांशो १७ जापेशो मृत्युशोमेषगः कुजः स्वनवांशगतश्चन्द्रो मेषे स्वे हद्दादशांशकः त्रयाणामि
त्थशालत्वात्कम्बूलं मध्योत्तमम् अथमध्यमध्यमकम्बूललक्षणं स्वहद्दादिपदस्थेनकम्बूलं मध्यमध्यम
म् अत्र स्वहद्दादिगतश्चन्द्रस्त्यनुवर्तते उदाहरणम् पुत्रप्रश्ने युग्मलग्नं तत्तुलायां नगांशकः स्वहद्दायां

स्थितस्तुकः पञ्चमेशोऽष्टमांशकः मिथुनेस्वीयहद्दायामिथु
जूकेनवांशकः स्वत्रिभागगतो योगेऽस्मूलम्मध्यमध्यमं यागे
इत्यशालाख्ये अथ मध्यमसमकम्मूललेशराम् मध्यमंसम
कंवूलंहीनाधिकृतिखेटजम् अत्रापिस्वगृहादिगश्चन्द्र इत्यनु
वर्तते उदाहरणं वृषलग्नसुतप्रश्ने मृगेवेदांशकः सितः समस्व
तस्यहद्दायांसुतेशोऽतः शरांशकः तुलायां समसंदस्यहद्दास्थो जूकगश्श
शीत्यमाशः स्वत्रिभागेतुकंवूलं मध्यमंसमं अथ मध्यमाध
मकंवूललक्षणं मध्यमाधमकंवूलं नीचारिभगखेटजं अ
त्राऽपिस्वहद्दादिगतश्चन्द्र इत्यनुवर्तते उदाहरणं भा
र्यप्रश्ने मेषलग्नं भौमः कर्केनवांशकः गुरुर्भाग्याधि
पोनीचे मकरे चन्द्रः शांशकः स्वद्रेष्काणगतश्चन्द्रस्तुला।
यांपंचमा

उत्तम मध्यम | उत्तम समम | उत्तमाधमम

मध्यमोत्तमम् | मध्यममध्यमम् | मध्यमसमम् | मध्यमाधमम्

गकः त्रयाणामित्यशालत्वात्कंबूलं मध्यमाधमं अथ समोत्तमकंबूललक्षणं इंदुः पदोनः स्वर्क्षोच्चस्थितेनाप्युत
मं तु नत् अत्र पदोनत्वं हि द्विविधं एकं तावद्धाराणां समगृहसमहद्दासमद्रेष्काणसमनवांशगतत्वम् द्वितीयं स्वक्षेप्रति
विकलारूपे समगृहहद्दाद्रेष्काणनवांशानामादौ प्रांते वावस्थितत्वमिति जीर्णेरीकाकृत् उदाहरणम् धनलाभा
भिधे प्रश्ने तुलालग्नं भार्गवः तुलायां नगभागाश्च धनेशो मकरे कुजः नवांशो मिथुने चंद्रो तद्द्दायांशशकः इ
न्दोस्समोत्तः कंबूलं योगप्रोक्तं समोत्तमम् ९ अथ सममध्यमकंबूललक्षणं स्वहद्दादिगतेनापि पूर्ववन्मध्यमुच्यते अ
त्रापि इंदुः पदोन इत्यनुवर्तते उदाहरणम् धनप्रश्ने तुलालग्ने शुक्रः सिंहे दशांशकः स्वहद्दायां धनाधीशो भौमश्चा
पदिगंशकः स्वहद्दायाश्च मिथुने समयुक्तस्य हद्दगः विधुर्दशांशायोगेस्मात्कंबूलं सममध्यमम् १० अथ समसमा
ध्यमध्यमकंबूललक्षणं पदोनेनापि मध्यस्यादिति युक्तमनीयते अत्रेंदुः पदोन इत्यनुवर्तते पदोनेन द्रेष्काणा
दिसंधिस्थेन लग्नेशेन कार्येशेन च उदाहरणम् द्रव्यप्रश्ने मेषलग्नं भौमः सिंहे धनाधिपः भृगुर्घटे विधुर्जूके त्र
यश्चामी दिगंशकाः द्रेष्काणसन्धौ संस्थित्या जातावामीपदोनिताः समसमस्त्वकंबूलम्प्रोक्तं नादित्यशालतः अथ
समाधमकंबूललक्षणम् नीचारिस्थेनेत्थशालेऽधमकंबूलमुच्यते अत्रेन्दुः पदोन इत्यनुवर्तते उदाहरणम्।
पुत्रप्रश्ने युग्मलग्नम्बुधो मीनेन वांशकः सुतेशः कन्यकायाश्च दशांशो नीचगो भृगुः समस्यन्त्स्यद्रेष्काणे चापे चन्द्र

शशांशकः त्रयाणामित्थशालत्वात्कम्बूलस्त्वसमाधमम् अथाधमोत्तमकम्बूललक्षणम् नीचशत्रुभगश्चन्द्रः स्वभो च्चस्थेनेत्थशालकृत् अधमोत्तमकम्बूलमिति उदाहरणम् सुखप्रश्ने सिंहलग्ने रविः सप्तांशकः क्रिये सुखेशोम करे भौमो नवांशो वृश्चिके शशी त्र्यंशस्त्रयाणां योगेनुकम्बूलमधमोत्तमम् १३ अथाधममध्यमकम्बूललक्षणम् ॥

| समोत्तमम ९ | सममध्यमम १० | समसमम ११ | समाधमम् १२ | धमोत्तमम १३ | अधममध्यमम १४ | धमसमम १५ |
|---|---|---|---|---|---|---|

स्वहद्दादिगतेनचेत् इत्थशाली कम्बूलतत्स्यात्तेऽधममध्यमम् अत्र नीचशत्रुभगश्चन्द्र इत्यनुवर्तते उदाहरणम् पुत्रप्रश्ने गानालग्ने स्वहद्दायां मृगे बुधः रामांशः पुत्रपो मन्दः स्वहद्दायां शरांशकः मीने वृश्चिकगश्चन्द्रः स्त्र्यंशश्चैषां तु योगतः प्रोक्तं चाधममध्यं तु कम्बूलं शास्त्रवेदिभिः अथाधमसमकम्बूललक्षणं पदोनेनेत्थशाली चेत्कम्बूलं त्वधमसमम् अत्र नीचशत्रुभगश्चन्द्र इत्यनुवर्तते उदाहरणम् वृषलग्ने राज्यलाभप्रश्ने सिंहगतः सितः सम

स्यार्के स्वगेहे तु शरांशो राज्यपः शनिः वृषे सम स्य शुक्रस्य गेहे खेंदु मितांशकः चंद्रो वृश्चिक गस्त्र्यंशस्त्वयाणामि
त्थशालतः कम्बूलं चाधमसमं प्रोक्तं ताजिकवेदिभिः १५ अथाधमाधमकंबूललक्षणं नीचारिभस्थ खेटेन नीचा
रिभगतः शशी इत्थशाली कंबूलं तदधमाधममुच्यते उदाहरणम् पुत्रप्रश्ने धनुर्लग्नं मृगो वस्वंशकोऽगुरुश्चार्के सु
ताधिपो भौमः पंचांशो वृश्चिके शशी त्र्यंशस्त्रयाणां योगे तु कंबूलमधमाधमं १६ कंबूले विशेषमुक्तं सत्ता
तंत्रे लग्नकार्यपयोरित्थशालेऽत्र कोऽस्ति नीचगः स्वर्क्षादिपदहीनोऽन्योऽत्रेन्दुः कंबूलयोगकृत् तत्र का
र्यं ऽल्पतां तेयाद्यथा जात्यन्यमर्थयत् अन्यजातिः पुमानर्थं न तत्र वयोविदुरिति अथ कंबूलयोगे
विंशोपकानयनम् निशेशलग्नेश्वरयोर्निशेशकार्येशयोः कार्यपलग्नयोश्च विंशोपका संमिलिता
स्त्रिभक्ता विंशोपकास्ते कथिताः कंबूले इति श्रीरामदैवज्ञगुरुपादाब्जभक्तितः कम्बूलमेदसहि
तम्बलभद्रेण निर्मितम् इति कम्बूलयोगः अथ गैरिकम्बूलम् तत्र गैरिकम्बूललक्षणमाह याद वः जातेत्थशा
लेऽस्तु म पीर दृष्टिस्थानेचरन्शीतरुचिस्तयोस्तु प्रविश्य कस्यापि गृहं तथोच्चकुर्याद्युतिं गैरिकंबूलमुक्तम् वद
न्ति चेत्तफलं तत्समानं कम्बूलयोगस्य तथैव भेदैः तथाहि गेहस्व निजोच्चकन्त्र्य यदातदानिष्टफलं कंबूलम् त
योर्लग्नेशकार्येशयोर्युतिमित्थशाल श्चेदित्थशालाव स्थितस्य ग्रहस्य ग्रहमुच्चं वा न भवति तदानिष्टमित्यर्थः उक्तं च ता

अधमाधमम् १६

हा॰ र॰ ३६

त्रिकालङ्करे तन्वेदगे हतुङ्गस्थानस्थाद्यदि च चन्द्रमा गैरिकमूलंयोगोसावभद्रः कथितोनुधैः अत्रोदाहर
णंसं ज्ञातव्यं लग्ने सुखमिति प्रश्ने सिंहलग्ने रविः क्रिये च्चाष्टांशे सुखप कुम्भे भौमोंशे रविभिस्तथा इत्थशा
लोस्तितन्त्रेन्दः कन्यायास्त्वरमेशाके स्वर्सादिपदहीनस्यनेत्थशालोस्तिकस्याचित् सस्वोच्चगेनशनिनाऽन्यदृशेस्थ
नेत्थशालकृत्नु गैरिकमूलमन्येन साहाय्याल्लाभदायकम् इतिगैरिकमूलम् अथ खल्लासरः तत्रखल्लासरयोगल
क्षणमाहयादवः द्वयोरथैकेन च शीघ्रभानुरदृष्टिमार्गे विचरन्करोति नमूथशीलन्न च संयुतिम्बा खल्लासरं ष्का
र्य्यहरस्तदास्यात् अत्र लग्नेशकार्य्येशयोरपि मुथशिलाभावो ज्ञेय इति केचिदाहुस्तन्न यतस्सर्वैः खल्लासरफल
ङ्कार्यनाशकमित्युक्तम् तत्र लग्नेशकार्याधिपयोरित्थशालाभावे कार्यप्राप्तिरेव न जाता तत्र कार्यसम्भवः स्वपु।
ण्यादि समस्तयोरित्थशाले कार्य्यप्राप्तिसम्भवे पिलग्नपकार्य्यपाभ्यामन्यद्दस्य युतौत्थशालासम्भवाल्के मद्धुमयोग
वदित्थशालफलनाशकः खल्लासरयोगोज्ञेय इति एतत्स्यष्टमुक्तं जीर्णताजिके लग्नेशकार्याधिपयोरित्थ
शालेन वा युतिः द्वाभ्यामन्यद्रौनेत्थशाली प्रोक्तः खल्लासरोशुभः उदाहरणम् लग्ने सुतमितिप्रश्ने सिंहलग्ने रविः
क्रिये वेदांशेस्तुतपः जीवः कुंभे शैरशरसम्मिते लग्नकार्यपयोरस्तियोगो मुथशिलाभिधः अथकन्यान्तिमेंशे च
विधुमुथशिले नहि द्वाभ्यामन्येनकार्येस्यनाशीखल्लासरो मतः इतिखल्लासरः अथरद्दयोगः तत्र रद्दयोगा।

राम ३६

लक्षणमुक्तं योगसुधानिधौ वक्रेणाद्युमणिक्रमभिगामिनास्तं प्राप्तेन व्यय १२ रिपु ६ नाश ८ गामिना च क्रूरेणाक्रमितेन भस्य देव्यथशालिनः दृढ हरति फलं ग्रहवर्षणीयम् अत्र विशेष उक्तस्ताजिकभूषणे आपोक्लिमस्थश्चरखेचरश्चेत्केन्द्रस्थमन्देन च मूथशीलम् करोति कार्ये प्रथमम्बिलम्ब्य पश्चाद्वश्यं सकलार्थसिद्धिम् केन्द्रस्थितश्शीघ्रगतिः करोति आपोक्लिमस्थेन च मूथशीम् मन्देन कार्यमथ प्रथमं च भूत्वा प्राते विनाशं समुपैत्यवश्यम् ७॥ अत्रोदाहरणम् ॥ ० ॥ भाग्यप्रश्ने मेषलग्ने भौमः कन्यागतो गुरुः भाग्यपस्तत्र तत्रैव संस्थितो रविमन्दगो सर्वे दिगंशप्रमिता रहो यं फलनाशकः वा तल्लग्ने मीनसंस्थः कुजो मकरगो गुरुः द्वौ दिगंशप्रागशुभम् शुभं पश्चात्प्रकीर्तितं वा तल्लग्ने कर्कसंस्थो भौमो मीनगतो गुरुः द्वौ दिगंशौ प्राक् शुभं स्यात् पश्चादशुभमेव च इति रहः अथ दुःफालिकुत्थयोगः तत्र दुःफालिकुत्थयोगलक्षणं ताजिकभूषणे मन्दस्तगेहे यदि वा निजोच्चे त्रैराशिके वापि निजे प्रकुर्यात् योगं चरेणानधिकारिणा चेद् दुःफालिकुत्थं शुभकृन्निरुक्तः योगस्तु शिलाख्यपदाधिकाररहितेन शीघ्रे[illegible] मूथशिलं कुर्यात् यदि स्तर्हि अधिकारसहितेनाप्यवश्यं पङ्कार्यकारि मिति जीर्णोद्धारोक्त[illegible] अत्रोदाहर

गौरिकेन्द्रलग्नम्

खहसारः

२६ योगः

